सुविहितधुरन्धरसाहित्यसौधानन्यस्तंभोपमश्रीहरिभद्रसूरिसूत्रित-

प्रदेशव्याख्यासंकलितं

# श्रीप्रज्ञापनोपांगं (पूर्वभाग:)

मुद्रयित्री—मालवदेशान्तर्गतश्रीरत्नपुरीयश्रीऋषभदेवकेसरीमलजी इत्यभिधाना श्वेताम्बरसंस्था.

मुद्रक—फकीरचंद मगनलाल बदामी. श्री 'जैनविजयानंद' प्रिन्टींग प्रेस, हवाडीयाचकला-सुरत.

वीरसंवत् २४७३ } पण्यम् रु. २-०-० } प्रतयः ५००

विक्रमसंवत् २००३ } सर्वेऽधिकाराः १८७८ तमनियमानुसारेण स्वायत्तीकृताः } क्राइस्टसन् १९४७

आचार्यपुरन्दरश्रीहरिभद्रसूरिसूत्रितप्रदेशविवरणयुतं

# श्रीप्रज्ञापनोपाङ्गम् ।



ॐ नमः सिद्धेभ्यः ॥ रागादित्रध्यपटहः सुरलोकसेतुरानन्ददुंदुभिरसत्कृतिवंचितानाम् । संसारचारकपलायनफालघंटा, जैनं वचस्तदिह को न भजेत विद्वान् ? ॥ १ ॥ तच्चाङ्गोपाङ्गप्रकीर्णकाद्यनेकभेदम्, इदं च सर्वमपि विधिनाऽऽसेव्यमानमध्येतृसंसर्तृप्रवक्तॄणामपवर्गावहमितिकृत्वा तदेकदेशप्रज्ञापनाऽऽख्योपाङ्गप्रदेशानुयोगः प्रारभ्यत इति, इदं चोपाङ्गं यथाऽवस्थितजीवादिपदार्थशासनाच्छास्त्रं, तदस्य प्रारंभ एवालोचितकारिप्रवृत्त्यङ्गत्वात् फलादिविभागः प्रदर्श्यते, उक्तञ्च–"प्रेक्षावतां प्रवृत्त्यर्थं, फलादित्रितयं स्फुटम् । मंगलं चैव शास्त्रादौ, वाच्यमिष्टार्थसिद्धये ॥१॥" तत्र प्रयोजनं तावत् परापरभेदभिन्नं द्विविधं, पुनरेकैकं कर्तृश्रोत्रपेक्षया द्विधैव, तत्र द्रव्यास्तिकनयाऽऽलोचनायामागमस्य नित्यत्वात् कर्तुरभाव एव, 'इत्येषा द्वादशाङ्गी न कदाचिन्नासीन् न कदाचिन्न भवती'त्यादिवचनात्, पर्यायनयालोचनायां चानित्यत्वात्तत्सद्भाव इति, तत्त्वालोचनायां तु सूत्रार्थोभयरूपत्वादागमस्यार्थापेक्षया नित्यत्वेऽपि सूत्रापेक्षयाऽनित्यत्वात् कथंचित्कर्तृसिद्धिरिति, तत्र सूत्रकर्त्तुः परमपवर्गप्राप्तिः, अपरं सत्त्वानुग्रहः, तदर्थप्रतिपादयितुः किं प्रयोजनमिति चेन्न किंचित्, कृतकृत्यत्वात्, प्रयोजनमन्तरेणार्थप्रतिपादनप्रयासोऽनर्थक इति चेन्न, तस्य तीर्थकरनामगोत्रकर्मविपाकत्वात्, तथा चोक्तं–"तं च कहं वेतिज्जति ? अगिलाए धम्मदेसणादीही'त्यादि । श्रोतॄणां त्वपरं तदर्थाधिगमः, परं मुक्तिरेवेति, तथा

च ते हि तत्परिज्ञानात् संसाराद्विरज्यंते, ततो मुक्त्यर्थं घटंते, ततस्तामवाप्नुवन्ति । अभिधेयं प्रज्ञापनादिषट्त्रिंशत्पदगतं जीवाजीवादि, सम्बंधस्तु साध्यसाधनलक्षणस्तर्कानुसारिणः प्रति सामर्थ्यगम्य एव, तथाहि—साध्यमुपेयोऽर्थः, साधनमेतदेव वचनरूपापन्नमिति, श्रद्धानुसारिणः पुनः अङ्गीकृत्य गुरुपर्व्वक्रमलक्षणः, स च स्थविरावलिकाऽनुसारतो विज्ञेय इति,वक्ष्यति च—"वायगवरवंसाउ" इत्यादि, तथा "अज्झयणमिणं चित्त"मित्यादि । सांप्रतं मंगलमुच्यते,यस्माच्छ्रेयांसि बहुविघ्नानि भवन्तीति, उक्तञ्च—'श्रेयांसि बहुविघ्नानि, भवंति महतामपि । अश्रेयसि प्रवृत्तानां, क्वापि यान्ति विनायकाः ॥१॥' इति, प्रज्ञापनाख्योपाङ्गानुयोगश्चापवर्गप्राप्तिबीजभूतत्वाच्छ्रेयोभूत एव, तस्मात्तदारम्भे विघ्नविनायकाद्युपशांतये तत् प्रदर्श्यत इति, तच्च मंगलं शास्त्रादौ मध्येऽवसाने चेष्यत इति, सर्वमेवेदं शास्त्रं मंगलमित्येतावदस्तु, मंगलत्रयाभ्युपगमस्त्वनर्थकः, प्रयोजनाभावादिति चेत् न, प्रयोजनाभावस्यासिद्धत्वात्, तथा च—कथन्नु नाम विनेयाः विवक्षितशास्त्रार्थस्याविघ्नेन पारं गच्छेयुः ?,अतोऽर्थमादिमंगलस्योपन्यासः,स एव कथन्नु नाम शिष्यप्रशिष्यादिवंशस्याव्यवच्छित्त्योपकारकः स्यादिति ?, अतोऽर्थं चरममंगलस्येत्यतो हेतोरसिद्धतेति । तत्र प्रथमपदगतेन 'ववगतजरमरण' इत्यादिग्रन्थेनादिमंगलमाह,तथोपयोगपदगतेन 'कतिविहे णं भंते ! उवओगे पण्णत्ते' इत्यादिना तु मध्यमंगलं,उपयोगस्य ज्ञानात्मकत्वात्,तस्य च प्रधानकर्मक्षयकारणत्वेन मंगलत्वाद्,उक्तं च—"जन्नेरइओ कम्मं खवेति बहुयाहिं वासकोडीहिं । तं णाणी तिहिं गुत्तो खवेति उस्सासमित्तेणं ॥१॥" तथा समुद्घातपदगतेन केवलिसमुद्घातपरिसमाप्त्युत्तरकालभाविना सिद्धाधिकारप्रतिबद्धेन 'निच्छिन्नसव्वदुक्खा जातिजरामरणबंधणविमुक्का । सासयमव्वाबाहं चिट्ठंति सुही सुहं पत्ते ॥१॥'त्यादिना चावसानमंगलमिति । शेषाक्षेपपरिहारः नामादिभेदप्रपंचो(चश्च) यथाऽऽवश्यकटीकायां न्यक्षेण निरूपितस्तथैवेहापि द्रष्टव्य इत्यलं प्रसंगेन,प्रकृतं

प्रस्तुमः, ववगतजरमरणभए सिद्धे अभिवंदिऊण तिविहेणं–जरा–वयोहानिलक्षणा मरणं–प्राणत्यागलक्षणं भयमिह लोकादि सप्तप्रकारं, तथा चोक्तं–"इहपरलोआआदाणमकम्हआजीवमरणमसिलोए" जरा च मरणं च भयं च जरामरणभयानि, व्यपगतानि–अपेतानि जरामरणभयानि येभ्यस्ते तथाविधाः, जरामरणभयविप्रमुक्ता इत्यर्थस्तान्, सितं ध्मातमेषामिति सिद्धा–निर्दग्धानेकभवबद्धकर्मेंधना इति भावना, अत एव च व्यपगतजरामरणभयाः, तत्कारणाभावात्, तान् सिद्धान् अभिवंद्य–आभिमुख्येन वंदित्वा, प्रणम्येत्यर्थः, अनेन ममानकर्तृकयोः पूर्वकाले क्त्वाप्रत्ययविधानान्नित्यानित्यैकान्तपक्षव्यवच्छेदमाह, नित्यानित्यैकान्तपक्षे तदसंभवात्, तथाहि–अप्रच्युतानुत्पन्नस्थिरैकस्वभावो नित्यः, तस्य कथं भिन्नकालक्रियाद्वयकर्तृत्वं, सदा तत्प्रसङ्गात्, तथा प्रकृत्यैकक्षणस्थितिधर्माऽनित्यः, तस्यापि कथं भिन्नकालक्रियाद्वयकर्तृत्वमवस्थानाभावाद्, अलं विस्तरेण, दिग्मात्रप्रदर्शनमेवैतत्, त्रिविधेनेति–मनसा वाचा कायेनेति, अनेन योगत्रयव्यापारविकलं द्रव्यवंदनमित्याह, वन्दे जिनवरेन्द्रं, यथा भुक्त्वा व्रजामि एवं सिद्धानभिवंद्य वन्दे जिनवरेन्द्रं, तत्र जिनाश्चतुर्विधाः–श्रुतावधिमनःपर्यायकेवलिजिनाः, तत्र केवलिजिनत्वादयं जिनवरः, यतश्चान्येऽपि सामान्यकेवलिनो यथा तीर्थंकरास्तथाविधा विद्यंते अयं तु प्रकृष्टपुण्यस्कंधरूपतीर्थंकरनामकर्म्मोदयात्तीर्थंकरो बभूव अतो जिनवराणामिन्द्रो जिनवरेन्द्रस्तं, किंभूतं?–'त्रैलोक्यगुरुं' गृणाति शास्त्रार्थमिति गुरुः त्रैलोक्यस्य गुरुस्त्रैलोक्यगुरुस्तं, तथा च भगवानधोलोकनिवासिभवनपतिदेवेभ्यः तिर्यग्लोकनिवासिव्यंतरनरपशुविद्याधरज्योतिष्केभ्यः ऊर्ध्वलोकनिवासिवैमानिकदेवेभ्यश्च धर्ममादिदेश, अथवा त्रैलोक्यगुरुं–त्रैलोक्यस्वामिनं, तत्र सर्व्वे एव ऋषभादयस्तीर्थंकरा यथोक्तगुणोपेता अत आह–'महावीरं' 'शूर वीर विक्रांता'विति कषायादिशत्रुजयात् महाविक्रान्तान्महावीरः, 'ईर गतिप्रेरणयो'रित्यस्य वा विपू-

र्व्वस्य विशेषेण ईरयति कर्म्म गमयति याति वेह शिवमिति वीरः,महांश्चासौ वीरश्च महावीरस्तं। आह—ऋषभादीन् व्युदस्य महावीरवंदनं किमर्थं?, उच्यते, वर्त्तमानतीर्थाधिपतित्वादासन्नोपकारित्वाच्चेति। आसन्नोपकारित्वं कथमिति चेत्, उच्यते, यतः 'सुयरयण'गाहा, द्विविधानि रत्नानि भवन्ति—द्रव्यरत्नानि भावरत्नानि च, तत्र द्रव्यरत्नानि वैडूर्यमरकतेन्द्रनीलादीनि, भावरत्नानि तु श्रुतव्रतादीनि, भावरत्नैरिहाधिकारः, श्रुतरत्नानां निधानं, निधानमिव निधानं तत्प्रभूताश्रयत्वात, जिनवरेण—केवलिना, किंभूतेन?—भव्यजननिवृत्तिकरेण, तत्रानादिपारिणामिकभव्यभावयुक्तो मोक्षगमनयोग्यो भव्यजनो निवृत्तिः—निर्वाणं भव्यजनस्य सम्यग्दर्शनादिनिवृत्तिमार्गकरणशीलो भव्यजननिवृत्तिकरः, कारणे कार्योपचारात्, अथवा लोकानुसरणादिना भव्यजननिवृत्तिकरस्तेन, आह—वीतरागद्वेषमोहत्वात् किमित्यभव्यजननिवृत्तिं न करोति?, उच्यते, अभव्यानामेतत्स्वभावाद्, उक्तं च वादिमुख्येन—"सद्धर्म्मबीजवपनानघकौशलस्य, यल्लोकबांधव! तवापि खिलान्यभूवन्। तन्नाद्भुतं खगकुलेष्विह तामसेषु, सूर्यांशवो मधुकरीचरणावदाताः॥१॥" 'उपदर्शिते'ति उप—सामीप्येन दर्शिता उपदर्शिता,उपदिष्टेत्यर्थः। प्रज्ञापनं प्रज्ञापना—प्ररूपणेति भावना, प्रज्ञाप्यन्तेऽनया जीवादयो भावा इति वा प्रज्ञापना, सर्वभावानामिति सर्व्वतत्त्वानां—जीवाजीवाश्रवबन्धसंवरनिर्जरामोक्षाणां, तथा चास्यां षट्त्रिंशत्पदानि, तत्र प्रज्ञापनाबहुवक्तव्यताविशेषाचरमपरिणामपदेषु जीवाजीवानां प्रज्ञापना, तथा प्रयोगक्रियापदयोस्त्वाश्रवस्य, कायवाङ्मनःकर्म्मयोगस्य आश्रववचनात्, तथा 'इंद्रियकषायाव्रतक्रिया०' वचनात्, तथा कर्म्मप्रकृतिपदे बंधस्य, तथा समुद्घातपदे केवलिसमुद्घातप्ररूपणायां संवरनिर्जरामोक्षाणां त्रयाणामपि, शेषपदेषु तु स्थानादिषु कस्यचित्कस्यचिदिति। अथवा 'सर्व्वभावाना'मिति द्रव्यक्षेत्रकालभावानामिति, एतावच्च प्रज्ञापनीयं, नान्यदस्तीत्यर्थः। तत्र प्रज्ञापनापदे

जीवाजीवद्रव्याणां, तथा स्थानपदे जीवाजीवाधारस्य क्षेत्रस्य, तथा स्थितिपदे नारकादिस्थितिनिरूपणात् कालस्य, शेषपदेषु संख्याज्ञानादिपर्यायव्युत्क्रांत्युच्छ्वासादीनां भावानामिति । अस्याश्च गाथायाः 'अज्झतणमिणं चित्त'मित्यनया गाथया सहाभिसंबंधः । अतश्च येनेयं सत्त्वानुग्रहाय श्रुतसागरादुद्धृता असावप्यासन्नतरोपकारित्वादस्मद्विधानां नमस्कारार्ह इत्यतस्तद्विषयमिदमपांतराल एवान्यकर्त्तृकं गाथाद्वयमिति । 'वायगवर' गाहा, वाचकाः—पूर्वविदः, वाचकाश्च ते वराश्च वाचकवराः, वाचकप्रधाना इत्यर्थः, तेषां वंशः—प्रवाहो वाचकवरवंशस्तस्मिन् त्रयोविंशतितमेन, तथा च सुधर्म्मादारभ्य आर्यश्यामस्त्रयोविंशतितम एव, किंभूतेन ?—धीः—बुद्धिस्तया राजते इति धीरः, धीरश्चासौ पुरुषश्चेति समासस्तेन, तथा दुर्द्धराणि—प्राणातिपातादिनिवृत्तिलक्षणानि पंच महाव्रतानि धारयतीति दुर्धरधरस्तेन, तथा मन्यते जगतस्त्रिकालावस्थामिति मुनिस्तेन मुनिना, विशिष्टसंधि(बुद्धि)समन्वितेन । तथा चाह—पूर्वश्रुतेन समृद्धा—वृद्धिमुपागता बुद्धिर्यस्य स तथोच्यते तेन, आह—यो वाचकवरवंशांतर्गतः तस्य पूर्वश्रुतसमृद्धा बुद्धिर्भवत्येव, सत्यं, किन्तु तथाप्याधिक्यप्रदर्शनार्थत्वान्न दोषः, तथा च चतुर्दशपूर्वविदामपि मतिमधिकृत्य षट्स्थानकं वक्ष्यति । श्रुतमेवानोरपारत्वात् सुभाषितरत्नयुक्तत्वाच्च सागरः श्रुतसागरस्तस्मात् 'वीणेऊण'त्ति देशीपदं सांप्रतकालीयपुरुषयोग्यं वीनयित्वेत्यर्थः, येन श्रुतरत्नं प्रज्ञापनोपांगमिदमेव उत्तमं—प्रधानं, न शेषश्रुतरत्नापेक्षया, किंतु स्वरूपत एव, दत्तं—संपादितं । कस्मै ?—शिष्यगणाय—शिष्यसंघाय, प्राकृतशैल्या चतुर्थ्यर्थे षष्ठी । भगः खल्वैश्वर्यादिलक्षणः सोऽस्यास्तीति भगवान् तस्मै भगवते नमः, कस्मै ?—आराद् यातः सर्व्वहेयधर्म्मेभ्य इत्यार्यः आर्यश्चासौ श्यामश्चेति समासस्तस्मै । अधुनोक्तसंबन्धैवेयं गाथा—'अज्झयण'मित्यादि, अध्ययनमिदं प्रज्ञापनोपाङ्गाख्यं, आह—यद्यध्ययनं किमित्युत्पन्नमाद्यनुयोगद्वारोपन्यासोऽस्यादौ न क्रियत इति, उच्यते, नायं नियमो यदध्यय-

नादावुपन्यासः क्रियत इति, आह—कुतोऽयमनियम इति गम्यते ?, उच्यते, इदमेवाध्ययनं ज्ञापकमिति, तथा नंद्यध्ययनादिष्व-दर्शनादित्यलं प्रसंगेन, चित्रार्थाधिकारयुक्तत्वात् चित्रं, श्रुतमेव रत्नं२, दृष्टीनां वादो दृष्टिवादो दृष्टिपातो वा तस्य निष्यंद इव निष्यंदः तत् यथा वर्णितं—कथितं भगवता श्रीमन्महावीरवर्द्धमानस्वामिनेन्द्रभूतिप्रभृतीनां अहमपि तथा वर्णयिष्यामि। आह—कथं छद्म-स्थस्य तथा वर्णयितुं शक्तिरिति, अत्रोच्यते, सामान्येनाभिधेयपदार्थवर्णनमधिकृत्यैवमभिधानाददोषः, तथा चाहमपि तथा वर्ण-यिष्यामि, किमुक्तं भवति ?—तदनुसारेण, न स्वमनीषिकयेति भावार्थः। इह च षड्त्रिंशत् पदानि भवंति, पदं प्रकरणमर्थाधिकार इति पर्यायाः, तानि चामूनि—'पण्णवण' गाहा 'ठाणा' गाहा 'ओगाहणा' गाहा 'आहारे' गाहा, एतद्गाथाचतुष्टयसंगृही-तानि षट्त्रिंशद्,एतेषु च जीवादीनां पदार्थानामनेकधा स्वरूपकथनं, तत्र प्रज्ञापनाबहुवक्तव्यविशेषचरमपरिणामपदेष्वित्यादि 'प-ण्णवणा सव्वभावाणं'ति गाथाऽवयवव्याख्यानाद्भावनीया, पदोपन्यासानंतरमिदमादिसूत्रं—'से किं तं पण्णवणा ?' अथास्य सूत्रस्य कः प्रस्ताव इति, उच्यते,प्रश्नसूत्रमिदं, एतच्चादावुपन्यस्यन्निदं ज्ञापयति—पृच्छतो मध्यस्थस्य बुद्धिमतोऽर्थिनो भगवदर्हदुपदि-ष्टतत्त्वप्ररूपणा कार्या, नान्यस्य, तथा चोक्तं—"मध्यस्थो बुद्धिमानर्थी, श्रोता पात्रमिति स्मृतः।" तत्र सेशब्दो मागधदेशीप्रसिद्धो निपातस्तत्रशब्दार्थे, अथशब्दार्थे वा द्रष्टव्यः, स च वाक्योपन्यासार्थ इति, किमिति परिप्रश्ने, तावदिति क्रमोद्योतने, प्रज्ञापनेति प्राग्वत्, ततश्चायं समुदायार्थः—तिष्ठंतु स्थानादीनि, तत्र किं तावत्प्रज्ञापना ?, वस्त्वितिवाक्यशेषः, अथवा प्राकृतशैल्या 'अभिधे-यवल्लिंगवचनानि भवंती'ति न्यायादेवं द्रष्टव्यं—तत्र का तावत् प्रज्ञापनेति, एवं सामान्येन केनचित् प्रश्ने कृते सति भगवान् गुरुः शिष्यवचनानुरोधेनादरार्थं किंचिच्छिष्योक्तं प्रत्युच्चार्याह—'पण्णवणा दुविहा पण्णत्ता' अनेन चागृहीतशिष्याभिधानेन निर्व्व-

चनसूत्रेणतदाह- न सर्वमेव सूत्रं गणधरप्रश्नतीर्थंकरनिर्व्वचनरूपं, किं तर्हि ?, किंचिदेव, बाहुल्येन तु तद्रूपमेव, तथा चोक्तं-"अत्थं भासइ अरहा सुत्तं गुंथंति गणहरा निउण"मित्यादि, अलं विस्तरेण, प्रकृतं प्रस्तुमः, प्रज्ञापनेति पूर्ववत्, द्विविधा-द्विप्रकारा प्रज्ञप्ता-प्ररूपिता, यदा तीर्थंकरगणधरा एवैवमाहुस्तदाऽयमर्थोऽवसेयः-अन्यैरपि तीर्थंकरगणधरैरिति, यदा पुनरन्यः कश्चिदाचार्यस्तन्मतानुसारी तथा तदा तीर्थंकरगणधरैरेवेति। द्वैविध्यमुपदर्शयन्नाह—'तंजहा जीवपण्णवणा य अजीवपण्णवणा य' तद्यथेति वक्ष्यमाणभेदकथनोपन्यासार्थः, जीवंति जीविष्यंति जीवितवंतश्चेति जीवाः-सुखदुःखविज्ञानोपयोगलक्षणाः, जीवानां प्रज्ञापना जीवप्रज्ञापना,न जीवा अजीवाः, जीवलक्षणविकला इत्यर्थः, तेषां प्रज्ञापना अजीवप्रज्ञापना, अत्र चकारौ द्वयोरपि प्राधान्यख्यापनार्थौ, नेहान्यतमस्य गुणभावः, एवं सर्वत्राक्षरगमनिका कार्या, एवं सामान्येन प्रज्ञापनाद्वये उपन्यस्ते सति विशेषतः स्वरूपमनवगच्छन्नाह—'से किं तं अजीवपण्णवणा,' आह 'यथोद्देशस्तथा निर्देश' इति न्यायात् किमन्यथा प्रश्नसूत्रोपन्यास इति ?,उच्यते, अल्पतरवक्तव्यत्वादजीवप्रज्ञापनायाः, अथवा अस्ति पूर्वानुपूर्वी अस्ति पश्चानुपूर्वीति न्यायप्रदर्शनार्थमिति,एवमन्यत्राप्यालोच्य वक्तव्यं,अधुना निर्व्वचनसूत्रमाह-'अजीवपण्णवणा दुविहा पण्णत्ते'त्यादि,निगदसिद्धं यावत् 'अरूवीअजीवपण्णवणा दसविहा पण्णत्ता'अरूपिणश्चेति समासः,अरूपिणः-अमूर्त्ताः,तामेव दशविधतां निदर्शयन्नाह-'तद्यथे'ति वक्ष्यमाणभेदकथनोपन्यासार्थं, धर्म्मास्तिकायः, तत्र जीवपुद्गलानां स्वाभाविके क्रियावत्त्वे तत्परिणतानां तत्स्वभावधारणाद्धर्म्मः अस्तयः-प्रदेशाः अस्तीनां कायोऽस्तिकायः, प्रदेशसंघात इत्यर्थः, धर्मश्चासावस्तिकायश्चेति समासः, अनेन सकलमेव तदवयविद्रव्यमाह, तथा धर्म्मश्चासावस्तिकायस्य देशः,देश इति तस्यैव बुद्धिपरिकल्पितो द्व्यादिविभागः,तथा धर्म्मास्तिकायस्य प्रदेशाः, प्रकृष्टा देशाः प्रदेशाः-निर्विभागा भागा

इत्यर्थः,ते चासंख्येया इतिकृत्वा बहुवचनं, अनेन चावयव्यवयवयोर्भेदाभेदमाह । तथा अधर्म्मास्तिकायः,तत्र जीवपुद्गलानां स्वाभाविके क्रियावत्त्वे तत्परिणतानां तत्स्वभावाधरणादधर्म्मः अस्तयः–प्रदेशाः अस्तीनां कायोऽस्तिकायः, प्रदेशसंघात इत्यर्थः, अधर्मश्चासावस्तिकायश्चेति समासः, शेषं भावितार्थं यावदधर्म्मास्तिकायस्य प्रदेशा इति । तथा आकाशास्तिकायः, तत्र सर्व्वद्रव्यस्वभावाऽऽदीपनादाकाशः,स्वभावलाभावस्थानदानादित्यर्थः,आङ्शब्दो मर्यादाऽभिविधिवाची,मर्यादायामाकाशे भवंति भावाः स्वात्मनि च, नाकाशभावमेव यांति,अभिविधौ तु सर्वभावव्यापनाद् ,आकाश एव भवंति सर्वे भावाः, अस्तयः–प्रदेशाः–अस्तीनां कायोऽस्तिकायः, प्रदेशसंघात इत्यर्थः, आकाशश्चासावस्तिकायश्चेति विग्रहः,शेषं भावितार्थं यावदाकाशास्तिकायप्रदेशा इति,नवरं अनंता इतिकृत्वा बहुवचनं, तथा अद्धासमयः, अद्धेति कालस्याख्या, अद्धा चासौ समयश्चेति समासः, अथवा अद्धायाः समयः२, समयो–निर्व्विभागः काल इत्यर्थः, तथा चोक्तं–'कालः परमनिकृष्टस्समयाख्य' इत्यादि, अयं चैक एव, वर्त्तमान इतिकृत्वा कायत्वाभाव इति, अतो देशप्रदेशकल्पनाऽभाव इति, तथा चातीतानागतौ समयौ न स्त एव, विनष्टानुत्पन्नत्वात्, भावे चातिप्रसंगात्, अत्राह–ननु च धर्म्मास्तिकायाधर्म्मास्तिकायौ स्त इत्यत्र किं प्रमाणं?, उच्यते, अनुमानं प्रमाणं, इह गतिः स्थितिश्च सकललोकप्रसिद्धे कार्यं वर्त्तते, कार्यं च परिणाम्यपेक्षाकारणाऽऽयत्ताऽऽत्मलाभं वर्त्तते, घटादिकार्येषु तथादर्शनात्, तथा च मृत्पिंडमात्रादेव स्यात्, न च भवति, गतिस्थिती अपि जीवपुद्गलाख्यपरिणामिकारणभावेऽपि न धर्म्माधर्मास्तिकायाख्यापेक्षाकारणमंतरेण भवत एव, यतश्च भावो दृश्यतेऽतस्तत्सत्ता गम्यत इति । ततश्चायं भावार्थः–गतिपरिणामपरिणतानां जीवपुद्गलानां गत्युपष्टम्भको धर्मास्तिकायो मत्स्यानामिव जलं, तथा स्थितिपरिणामपरिणतानां च स्थित्युपष्टम्भकोऽधर्म्मास्तिकायो मत्स्यादीनामिव मेदिनी विवक्षया जलं वा, प्रयोगश्च–

गतिस्थिती अपेक्षाकारणवत्यौ कार्यत्वात् घटवत्, विपक्षस्त्वैलोक्यशुषिरमभावो वेत्यलं प्रसंगेन, गमनिकामात्रमेतत्। आह–आकाशास्तिकायसत्ता कथमवगम्यते?, उच्यते, अवगाहदर्शनात्, तथा चोक्तं–"अवगाहलक्षणमाकाश"मिति, आह–कालसत्ता कथमवगम्यते?, उच्यते, बकुलचंपकाशोकादिपुष्पफलप्रदानस्यानियमेनादर्शनात्, नियामकश्च काल इति, आह–इत्थमेव क्रमेण धर्म्मास्तिकायाद्युपन्यासः किमर्थम्?, उच्यते, धर्मास्तिकायादिपदस्य मांगलिकत्वात् प्रथमं धर्मास्तिकायोपन्यासः, पुनर्धर्मास्तिकायप्रतिपक्षत्वादधर्मास्तिकायस्य, पुनस्तदाधारत्वादाकाशास्तिकायस्य, पुनरजीवत्वसाम्यात् समयस्य, अथवा लोकालोकव्यवस्थाहेतुत्वात् प्रथमं धर्म्माधर्म्मास्तिकाययोः, तथा चोक्तं–"धर्म्माधर्म्मौ लोकव्यवस्थाहेतू" तथाऽन्यत्राप्युक्तं–"जीवादीनां वृत्तिर्द्रव्याणां भवति यत्र तत् क्षेत्रम्। तैर्द्रव्यैः सह लोकस्तद्विपरीतं ह्यलोकाख्यम् ॥१॥ धर्म्माधर्म्मविभुत्वात् सर्वत्र च जीवपुद्गलविचारात्। नालोकः कश्चित् स्यान्न च सम्मतमेतदार्याणाम् ॥२॥ तस्माद्धर्म्माधर्म्माववगाढौ व्याप्य लोकखं सर्वम्। एवं हि परिच्छिन्नः सिद्ध्यति लोकस्तदविभुत्वात् ॥३॥" पुनर्लोकालोकव्यापित्वादाकाशास्तिकायस्य, पुनर्लोकेऽपि समयासमयक्षेत्रव्यवस्थाकारित्वादद्धासमयस्य, एवमागमानुसारेणान्यदपि युक्त्यनुपाति वक्तव्यमित्यलं प्रपंचेन, 'सेत्तं अरूविअजीवपण्णवणा' सा तावदियमरूप्यजीवप्रज्ञापना। पुनराह विनेयः–'से किं तं रूविअजीव०?' इत्यादि, रूपिणश्च तेऽजीवाश्चेति समासः, मूर्ता इत्यर्थः, तत्र स्कन्धा इति बहुवचननिर्देशोऽनन्तस्कन्धसत्ताज्ञापनार्थः, उक्तं च–'दव्वतो णं पोग्गलत्थिकाये अणंते' इत्यादि, स्कन्धदेशा बुद्धिपरिकल्पिताः, स्कन्धानां स्कन्धत्वपरिणतानामेव द्व्यादिविभाग इति, स्कन्धप्रदेशा बुद्धिपरिकल्पिताः स्कन्धत्वपरिणतानामेव प्रकृष्टा देशाः, परमाणव इत्यर्थः, परमाणुपुद्गलाः स्कन्धत्वबन्धविकलाः, केवला इत्यर्थः, ते स्कन्धादयः समासतो यथासंभवं पंचविधाः प्रज्ञप्ताः, तद्यथा–वर्णपरिणता इत्यनेन

त्रैकालिकीं वृत्तिमाह, परिणमंति परिणंस्यन्ति चेति, तथा चोक्तं—"भवति स नामातीतः प्राप्तो यो नाम वर्त्तमानत्वम्। एष्यंश्च नाम स भवति यः प्राप्स्यति वर्त्तमानत्वम् ॥१॥" शेषं कण्ठ्यं यावत् 'जे फासतो कक्खडफासपरिणता' इति, अत्रावधीकृतस्पर्शप्रतिपक्षनिषेधेन स्कन्धाः विशिष्टैकपरिणामपरिणता एव चतुःस्पर्शा गृह्यंते, ततश्च वक्ष्यमाणस्कन्धविशेषविषयमेवेदं द्रष्टव्यं, केषांचित् पुनर्बादराणां गता(त्या)युर्देहस्कन्धानामिवापान्तरालस्कन्धभेदात् कृष्णाद्यशेषवर्णसंभवादष्टस्पर्शताऽप्यविरुद्धैव, तथा च देहस्कन्ध एव लोचने स्कन्धः कृष्णस्तदन्तर्गत एव च कश्चिल्लोहितः अन्यः शुक्ल इत्यादि भावना, देहापेक्षया पुनरसावेकः स्कन्ध एव, तथापरिणामादिति, शेषं सूत्रसिद्धं यावत् 'से किं तं जीवपण्णवणा,' इत्यादि, अत्र संसरणं संसृतिर्वा संसारः—तिर्यङ्नरनारकामरभवानुभूतिलक्षणस्तं समापन्नाः, संसारे वर्त्तत इत्यर्थः, असंसारो—मोक्षस्तं समापन्नाः असंसारसमापन्नाः, मुक्ता इत्यर्थः, शेषं निगदसिद्धं यावत् 'अणंतरसिद्ध' इत्यादि, तत्रानन्तरसिद्धाः सिद्धत्वप्रथमसमयवर्तिनस्ततोऽन्ये परम्परसिद्धा इति, 'से किं तं अणंतरसिद्धअसंसारसमावण्णजीवपण्णवणा ?, ०जीवपण्णवणा पनरसविहा पण्णत्ता' यत उपाधिभेदादनन्तरसिद्धाः पंचदशविधाः संभवंति, तथा चाह—'तंजहा–तित्थसिद्धा' इत्यादि, तत्र तीर्थे सिद्धास्तीर्थसिद्धाः, तीर्थं पुनश्चतुर्वर्णः श्रमणसंघः प्रथमगणधरो वा, तथा चोक्तं—"तित्थं भंते ! तित्थं ? तित्थगरे तित्थं ?, गोयमा ! अरिहा ताव नियमा तित्थंकरे, तित्थं पुण चाउवण्णो समणसंघो" इत्यादि, ततश्च तस्मिन्नुत्पन्ने ये सिद्धास्ते तीर्थसिद्धाः, अतीर्थे सिद्धा अतीर्थसिद्धाः, तीर्थान्तरे सिद्धा इत्यर्थः, श्रूयते च—"जिणंतरे साहुवोच्छेदो" त्ति, तत्रापि जातिस्मरणादिनाऽवाप्तापवर्गमार्गाः सिद्ध्यन्त एव, मरुदेवीप्रभृतयो वा अतीर्थसिद्धाः, तदा तीर्थस्यानुत्पन्नत्वात्, तीर्थकरसिद्धाः तीर्थकरा एव संतो ये सिद्धाः, अतीर्थकरसिद्धाः अन्ये सामान्यकेवलिनः, 'स्वयंबुद्धसिद्धाः'

स्वयंबुद्धाः संतो ये सिद्धाः, 'प्रत्येकबुद्धसिद्धाः' प्रत्येकबुद्धाः संतो ये सिद्धा इति, अथ स्वयंबुद्धप्रत्येकबुद्धयोः कः प्रतिविशेषः ? इति, उच्यते–बोध्युपधिश्रुतलिङ्गकृतो विशेषः, तथाहि–स्वयंबुद्धाः बाह्यप्रत्ययमन्तरेणैव बुध्यंते, प्रत्येकबुद्धास्तु न तद्विरहेण, श्रूयते च बाह्यवृषभादिप्रत्ययसापेक्षतया करकण्ड्वादीनां प्रत्येकबुद्धानां बोधिरिति, उपधिस्तु स्वयंबुद्धानां द्वादशविधः पात्रादिः, प्रत्येकबुद्धानां तु नवविधः प्रावरणवर्ज्यः, स्वयंबुद्धानां पूर्वाधीते श्रुतेऽनियमः, प्रत्येकबुद्धानां तु नियमतो भवत्येव, लिङ्गप्रतिपत्तिः स्वयंबुद्धानां आचार्यसंनिधावपि भवति, प्रत्येकबुद्धानां तु देवता प्रयच्छतीत्यलं विस्तरेण। 'बुद्धबोधितसिद्धाः' बुद्धाः–आचार्यास्तैर्बोधिताः सन्तो ये सिद्धास्ते इह गृह्यन्ते, एते च सर्वेऽपि केचित् स्त्रीलिङ्गसिद्धाः केचित् पुंल्लिंगसिद्धाः केचिन्नपुंसकलिङ्गसिद्धा इति, आह–किं तीर्थकरा अपि स्त्रीलिंगसिद्धाः भवंति ?, भवंतीत्याह, यत उक्तं सिद्धप्राभृते–''सव्वत्थोवा तित्थकरीसिद्धा, तित्थकरितित्थे णोतित्थसिद्धा असंखिज्जगुणा, तित्थकरितित्थे णोतित्थगरिसिद्धा संखेज्जगुणा, तित्थगरितित्थे णोतित्थगरसिद्धा संखेज्जगुणा'' इति, न नपुंसकलिङ्गे, प्रत्येकबुद्धास्तु पुंल्लिङ्ग एव, स्वलिङ्गसिद्धाः द्रव्यलिङ्गं प्रति रजोहरणगच्छ(गुच्छक)धारिणः, अन्यलिंगसिद्धाः(परिव्राजकादिलिंगेन) 'अणेगसिद्धा' इति एकस्मिन्नेव समये अष्टशतं यावत् सिद्धं, यस्मादाह–''बत्तीसा अडयाला सट्ठी बावत्तरी य बोद्धव्वा। चुलसीई छण्णउती दुरहियमट्ठुत्तरसयं च ॥१॥'' सेत्तं अणंतरसिद्धअसंसारसमावण्णजीवपण्णवणा। 'से किं तं परंपर० ?' इत्यादि, न प्रथमसमयसिद्धा अप्रथमसमयसिद्धाः परंपरसिद्धविशेषणप्रथमसमयवर्त्तिनः, सिद्धत्वद्वितीयसमयवर्त्तिन इत्यर्थः, आदिषु तु द्विसमयसिद्धादयः प्रोच्यन्ते, यद्वा सामान्येनाप्रथमसमयसिद्धाभिधानं विशेषतो द्विसमयादिसिद्धाभिधानमिति, शेषं प्रकटार्थं यावत् ''तंजहा एगिंदिया'' इत्यादि, इन्द्रो–जीवस्तस्य जीवस्य लिंगमिन्द्रियं, एकमिन्द्रियं

येषां ते एकेन्द्रियाः, एवं द्वाविन्द्रियौ येषामित्येवमक्षरगमनिका कार्या, एतदुक्तं भवति–स्पर्शनेन्द्रियावरणक्षयोपशमे शेषेन्द्रियाणां चावरणे वर्त्तमाना एकविज्ञानसंयुक्ताः एकेन्द्रियाः,स्पर्शनरसनेन्द्रियावरणक्षयोपशमे शेषेन्द्रियावरणे च वर्त्तमाना द्विज्ञानसंयुक्ताः द्वीन्द्रियाः,स्पर्शनरसनघ्राणेन्द्रियावरणक्षयोपशमे शेषेन्द्रियावरणे च वर्त्तमानास्त्रिविज्ञानसंयुक्तास्त्रीन्द्रियाः, स्पर्शरसनघ्राणचक्षुरिन्द्रियावरणक्षयोपशमे शेषेन्द्रियावरणे च वर्त्तमानाश्चतुर्विज्ञानसंयुक्ताश्चतुरिन्द्रियाः, स्पर्शनरसनघ्राणचक्षुःश्रोत्रेन्द्रियावरणक्षयोपशमे वर्त्तमानाः पंचेन्द्रिया इति। 'से किं तं एगिंदिया ?, २ पंचविहा पन्नत्ता, तंजहा–पुढविकाइए" इत्यादि, तत्र पृथिव्येव कायः पृथिवी वा कायो येषां ते पृथिवीकायाः,त एव पृथिवीकायिकाः,एवं शेषा अपि वक्तव्याः,'से किं तं पुढविक्काए' इत्यादि, इह च सूक्ष्मनामकर्मोदयात् सूक्ष्माः,बादरनामकर्मोदयाच्च बादराः,नत्वापेक्षिकं बादरसूक्ष्मत्वमिति,पर्याप्तकापर्याप्तकभेदचिंतायां तु पर्याप्तिर्नाम शक्तिः सामर्थ्यविशेष इत्यर्थः,सा च पुद्गलद्रव्योपचयादुत्पद्यते,'तओ छ पज्जत्तीओ आहार० सरीर० इंदिय० आणापाण० भास० मणोपज्जत्ती वे'ति, तत्रैकेन्द्रियाणां चतस्रो विकलेन्द्रियाणां असंज्ञिनां च पञ्च संज्ञिनां षट्' तत्र आहारपर्याप्तिर्नाम खलरसपरिणामनसत्ती आहारपज्जत्ती, सप्तधातुतया रसस्य परिणामनशक्तिः शरीरपर्याप्तिः, पंचानामिन्द्रियाणां योग्यान् पुद्गलान् गृहीत्वाऽनाभोगनिर्वर्त्तितेन वीर्येण तद्भावनयनशक्तिरिन्द्रियपर्याप्तिः,आणापाणजोगे पुग्गले घेत्तूण तथा परिणामेत्ता आणापाणणिसिरणसत्ती आणापाणपज्जत्ती, वइजोगे पोग्गले घित्तूण भासत्ताए परिणमित्ता वइजोगत्ताए निसिरणसत्ती भासापज्जत्ती, मणोजोगे पोग्गले चित्तूण मणत्ताए य परिणामेत्ता मणजोगत्ताए निसिरणसत्ती मणपज्जत्ती। एयाओ पज्जत्तीओ पज्जत्तगनामकम्मोदएण णिव्वत्तिज्जंति, तं जेसिं अत्थि ते पज्जत्तया, अपज्जत्तयणामकम्मोदएण अणिवत्ताओ जेसिं अत्थि तेऽपज्जत्तया,एयाओ पज्ज-

त्तीओ जुगवं आढप्पंति, अंतोमुहुत्तेण य निव्वत्तिज्जंति, तह आहारपज्जत्तीए निव्वत्तिकालो समय एव, कहं ?, भण्णति, जम्हा आहारपदे बितिए उद्देसए सुत्तं—"आहारपज्जत्तीए अपज्जत्तए णं भंते ! जीवे किं आहारए अणाहारए ?, गोयमा ! णो आहारए, अणाहारए," सो य विग्गहे आहारपज्जत्तीए अपज्जत्तओ लब्भति, जदि पुण उववायखेत्तपत्तोऽवि आहारपज्जत्तीए अपज्जत्तओ होज्जा तो एवं वागरणं होज्जा—गोयमा ! सिय आहारए सिय अणाहारए, जहा सरीरादिपज्जत्तीसु सिय आहारए सिय अणाहारए, सेसाओ पुण असंखेज्जसमइयाओ अंतोमुहुत्तेण णिव्वत्तिज्जंति" शेषं प्रकटार्थं यावद् 'बादरकाए मणिविहाणा गोमेज्जया'इत्यादि, अत्र मणिविहाणेत्ति गोमेज्जगाइहिं संबज्झति, शेषं सूत्रसिद्धं यावत् 'तत्थ णं जे ते अपज्जत्तगा ते णं असंपत्ते'त्यादि,' असंप्राप्ता वर्णादीन् विशेषान्, वर्णादिशविभागो भवति बादराणां, ते च उच्छ्वासपर्याप्त्याऽपर्याप्ता एव म्रियंते, नतु शरीरेन्द्रियपर्याप्तिभ्यां, यस्मादागामिभवायुष्कं बद्ध्वा म्रियंते, तच्च शरीरेन्द्रियादिपर्याप्त्या पर्याप्तानां बध्यत इति, असंप्राप्ता वर्णादीनित्येके, एतच्च किल शरीरादिपर्याप्तिप्रतिषेधविधिभ्यां शरीरमात्रापेक्षत्वाच्च वर्णादीनां न युज्यत इत्यतोऽसंप्राप्ताः पर्याप्तिं साकल्येनेत्यन्ये, 'तत्थ णं जे ते पज्जत्तगा' इत्यादि, वर्णादेशेन वर्णभेदविवक्षयेत्यर्थः, एवं गन्धादिष्वपि वक्तव्यं,'सहस्सग्गसो विहाणा' इति, सहस्राग्रसो भेदाः 'संखेज्जाइं जोणिप्पमुहसतसहस्साइं'ति, संख्येया योनिद्वारलक्षा इत्यर्थः, अत्र चैकविशिष्टवर्णादियुक्ताः संख्यातीता अपि स्वस्थाने व्यक्तिभेदेन योनयः जातिमधिकृत्यैकैव गण्यते अतः संख्येयत्वमविरुद्धमिति, 'पज्जत्तगणिस्साए अपज्जत्तगा वक्कमंति'त्ति व्युत्क्रामन्ति—उत्पद्यन्ते, 'जत्थ य एगो' इत्यादि, यत्रैकः पर्याप्तक उत्पद्यते तत्र तन्निश्रयैव नियमेनासंख्येयाः पर्याप्तका इति, शेषं निगदसिद्धं यावत् 'हरतणुए'त्ति, भूमीउ चडेऊण गोधूमंकुरादिषु बिंदुबंधो

हरतणुजो, शुद्धोदकं नद्यादिषु, 'इंगाले'त्ति तत्राङ्गारः-खादिरादिः प्रतीतः ज्वाला अनलसंबंधा मुर्मुरः फुंफुकादौ मसृणाग्निः अर्चिः अनलाप्रतिबद्धा, प्रदीपशिखेति चान्ये,अलातं-उल्मुल्कं शुद्धाग्निरयस्पिण्डादौ, शेषं प्रकटार्थं यावत् 'विदिसिवाए'त्ति विदिक्षु यो वाति, वातोद्भ्रमोऽनवस्थितः वातोत्कलिका समुद्रोत्कलिकेव, वातमण्डलिका वातोली, उत्कलिकावात उत्कलिकाभिर्यो वातमंडलिकादिभिरिति, गुंजावातो गुंजनशब्दं वाति, झंझावातोऽसुभनिष्ठुरः, संवर्त्तकवातस्तृणादिसंवर्त्तनस्वभावः, घनवातो घनपरिणामो रत्नाद्यधोवर्त्ती, तनुवातो विरलः, शुद्धवातो मन्दस्तिमितः, दइयाइगतमन्ये, शेषं सूत्रसिद्धं यावत् 'एतेसि णं मूलावि असंखेज्जजीवे'त्यादि, मूलाः-प्रसिद्धा कन्दहेडा य पसरंति, तदुपरि कंदा प्रसिद्धा चेव, खंधो-गुंठो तया-छल्ली साला-साहा पवाला-अंकुरा, शेषं सुगमं यावत् 'सेत्तं कुहणा' एत्थ य जत्थेगत्थ रुक्खादिणाममेगं चित्तूण पुणोऽवि अन्नत्थ तं चेव गेण्हति तत्थ भिन्नजातीओ सरिसणामो अन्नो चेव दट्ठव्वो, अण्णे भणंति-किलेगोवि अणेगजातीओ कोइ होति, सो अण्णेसुपि णिद्दिसिज्जति ण दोसो। णाणाविहसंठाणरुक्खाणं एगजीविया पत्ता केसिंचि, अतिप्रसङ्गनिवृत्त्यर्थमपवादमाह-'खंधोऽवि एगजीवो' इत्यादि, किंलक्षणाः पुनः प्रत्येकतरवो भवंति ? इत्यत आह-'जह सगल'गाहा, यथेति दृष्टान्तोपन्यासार्थः, सकलसर्षपाणां श्लेषमिश्रीकृतानां वर्तिता-वलिता वर्तिता। तस्यां च वर्त्तौ प्रत्येकप्रदेशाक्रमणेन सिद्धार्थकाः स्थिताः तामन्योऽन्यानुवेधभाजः स्युः, श्लेषग्रहणं तु प्रतिबंधाचारप्रतिपत्तये, यथाऽसौ वर्त्तितस्तथा प्रत्येकतरुशरीरसंघातः, यथा सिद्धार्थकास्तथा तदधिष्ठायिनो जीवाः, यथा श्लेषमिश्रीभावविमिश्रिताः तथा रागद्वेषप्रचितपुद्गलोदयविमिश्रिता जीवाः, पश्चिमार्द्धेन गाथायां उपन्यस्तदृष्टान्तेन सह साम्यं प्रतिपादितं, तथेति शब्दोपादानादिति। 'जह वा तिल' गाहा, तिलपर्पट एव तिलपर्पटिका देशीशैल्याऽभि-

धीयते, शेषं पूर्वगाथातुल्यमेव भावनीयमिति, शेषं सुगमं यावत् 'चक्कार'मित्यादि, चक्राकारा भङ्गा ये मूलकन्दत्वक्पत्रपुष्पफलादयस्तेन ताः, ग्रन्थिरिति च-गच्छस्थानं तच्च, तेषां, श्वेतिका पर्वणः श्लेषवद्वर्तिकाछेद इव घनं भवति, न विषमच्छेदमुद्दंतुरं वा, सरीरं मूलसंगवदिति, अथवा पृथिवीसदृशच्छेदं यत्तदनन्तमिति, सूर्यकिरणनिकरप्रतप्तकेदारतरिकाप्रतरखण्डसमभंगं, अनंतजीवं विजानीहि तान् । 'गूढछिरागं'ति सुगमं। 'पुप्फा जला थे'त्यादि, अतिमुक्तकादिपुष्पाणि वृत्तबद्धानि जात्यादिषु पुष्पाणि नालीकाबद्धानि,शेषं सुगमं यावत् पिण्डवाहिरेत्यादि,पोक्खरत्थिया-कंठिया मिंजाउ-फलाणि वलिमोडओ-पर्व्वपरिवेष्टनं चक्राकारं, वेढो गिरो कडाहंति एगजीवस्स। 'जोणिभूते' गाहा, योन्या अपरित्यक्ते बीजे,भूतशब्दोऽयमवस्थावाची,योन्यवस्थे बीजे-योनिपरिणाममजहतीतियावत्, बीजस्य हि द्विविधा अवस्था-योन्यवस्था अयोन्यवस्था च, यदा योन्यवस्थां न जहाति बीजमुज्झितं च जंतुना तदा योनिभूतमभिधीयते, योनिस्तु जन्तोरुत्पत्तिस्थानमेवमिष्टं तत्रस्थं, जीवपरिणामनशक्तिसंपन्नमित्यर्थः, तस्मिन् बीजे योनिभूते जीवो व्युत्क्रामति-उपपद्येत स एव-पूर्वको बीजजीवोऽन्यो वा आगत्य तत्रोत्पद्यते,यदा जीवेनायुषः क्षयाद् बीजपरित्यागः कृतो भवति, तस्य च यदि बीजस्य पुनरम्बुकालाकाशसंयोगस्तदा कदाचित् स एव प्राक्तनो जीवस्तत्रागत्य परिणमेत,कदाचिदन्य इति,यश्च मूलतया जीवः परिणमते स एव प्रथमपत्रतयाऽपीत्येकजीवकर्तृके मूलप्रथमपत्रे इति यावत्,प्रथमपत्रकं च या असौ बीजस्य समुच्छूनावस्था भूजलकालापेक्षा सैव प्रथमपत्रव्यपेदशमर्हति,नियमप्रदर्शनमेतत्,शेषं किसलयादि सकलं नावश्यं मूलजीवविपरिणामाविर्भावितमिति मंतव्यं,ततश्च "सव्वोऽवि किसलयो खलु उग्गममाणो अणंतओ भणिओ" इत्याद्यपि वक्ष्यमाणमविरुद्धं,मूलपत्रनिर्वर्त्तनारंभकाले किशलयत्वाभावात्, आह-प्रत्येकशरीरवनस्पतिकायिकानां शरीरावस्थां प्रति किं प्रत्येकशरीरत्वं सर्वकालमुतावस्था-

मूलप्रथमपत्रे

विशेषे कस्मिंश्चिदनन्तत्वमपि संभवति ?, साधारणवनस्पतिकायिकानामपि किमनन्तत्वं सर्वकालमुत प्रत्येकशरीरत्वमपि कदाचित् संभवतीत्यत आह–'सव्वोऽवि किसलओ' इत्यादि, यः सर्वशब्दः अयमपि विशेषवाची, सर्वो वनस्पतिकायः प्रत्येकशरीरः साधारणो वा किशलयावस्थां प्रति 'अणंतओ भणिओ,' स एवानन्तवनस्पतिकायः प्रवृद्धिं गच्छन् अनन्तो वा भवति परित्तो वा भवति, कहं ?, भण्णति–जइ साहारणसरीरं निव्वत्तियं तदा साहारण एव भवति, अह पत्तेयत्तं ततस्तत् किशलयं परित्तमेव भवति, विवड्ढमाणं पुण अंतोमुहुत्तं, कहं ?, णिओयजीवाण अंतोमुहुत्तं ठिती वण्णिया, तेण अंतोमुहुत्ताओ परेण वड्ढमाणो परित्तो होति, अत्र केचिद् वर्णयंति–साधारणाधिकारे पठितत्वात् साधारणकिशलयस्यैव ग्रहणमिति, तच्च न, अपिशब्दोपादानादुद्गच्छन्निति च विशेषोपादानात्, तथा च सति संभवे व्यभिचारे च विशेषणविशेष्यभाव इति वचनात्, तस्मादुभयकिशलयस्यैव ग्रहणमिति। साधारणलक्षणं प्रतिपादयन्नाह–'समयं' गाहा, समयं–युगपद् व्युत्क्रान्तानां–उत्पन्नानां समकं तेषां शरीरनिर्वृत्तिर्भवति, समकं च प्राणापानग्रहणं, समकं उच्छ्वासनिश्वासौ तदुत्तरकालभाविनाविति, "एक्कस्स उ" गाहा, एको यदाहारादि गृह्णाति तद् बहूनां ग्रहणं, यद् बहवो गृह्णन्ति तदपि संक्षेपादेकस्य ग्रहणं, साधारणं–सामान्यं, किं पुनः साधारणं तेषामिति ?, उच्यते–आहारः प्राणापानौ चेत्यादि, एकस्मिन्नाहारप्रवृत्ते सर्वे प्रवृत्ता भवंति, एवं प्राणापानयोग्यपुद्गलोपादानमोक्षप्रवृत्तिरपि भावनीया। "जह अयगोलो" गाहा, निगदसिद्धा॥ "एगस्स" गाहा, नैकादीनामसंख्येयावसानानामनन्ततरुजीवानां शरीराण्युपलभ्यन्ते, कुतः ?, अभावात्, न ह्येकादिजीवगृहीतान्यनन्तानां शरीराणि संति, अनन्तजीवपिंडत्वादेव, कथं तर्ह्युपलभ्यास्ते भवन्तीत्यत आह–'दीसंति' दृश्यन्ते शरीराणि बादराणि बादरनिगोदानामनन्तजीवानां, सूक्ष्मनिगोदानां तु नोपलभ्यंते, अनन्तजीवसंघातत्वे सत्यपि शरीराणीत्यर्थः, निगोदास्तु नियमत

एवानन्तजीवसंघाता भवंतीत्याह—"गोला य असंखिज्जा होंति निगोदा असंखया गोले । एक्केको य णिगोदो अणंतजीवो मुणेयव्वो ॥१॥" एतेषां प्रमाणमभिधातुकाम आह—"लोयागास" गाहा ॥ द्वयमपि निगदसिद्धं, नवरमेकगृहान्तर्गतक्षेत्रे प्रदीपप्रभावस्थानन्यायेन विचित्रपरिणामसंभवाद् भावनीयं । 'पत्तेय' गाहा, प्रतरः संहितचतुरस्सीकयलोयस्स घेप्पति, शेषं सूत्रसिद्धं यावत् खुल्ला गुल्लियाओ, खुल्ला सामुद्दसंखणका, शेपं सुगमं यावत् 'सत्त जातिकुलकोडी'त्यादि, अस्य भावना, सत्त जाती कुलकोडीण जोणिप्पमुहा—जोणिप्पवाहा सत्तसहस्सा हवंति इति—एवमाशंकायां भगवता परिथूरोदाहरणेण दंसिज्जति, जहा जाती तिरिक्खजाती, तीए कुलाणि किमिकीडविच्छुगाणि,जोणिप्पवहाणि य एयाणि, तथा च एगजोणिए चेव अणेगाइ कुलाइं भवंति, जहा छगणजोणीए कृमिकुलं कीडगकुलं विच्छुयकुलमित्यादि, अथवा किमिजातीकुलं कीडगजातीकुलमित्याद्यपान्तरजातिभावात्, थूरोदाहरणं चैवैतदिति, शेषमनिगूढार्थं यावत् पदावसानं, नवरं वीयावा—जाती शतपदी—गोम्ही कण्णवि—सिवाली आसालिया नाम अंगुलसंख्येयभागकायादिभेदा यावद् द्वादशयोजनानि घोरगृद्धा, समुद्गकवत् स्थितौ पक्षौ गच्छतामपि ततावेव नित्यमनाकुंचितौ पक्षौ, एव चम्म इति । संक्षेपरुचिदर्शनाधिकारे 'सहसंमुतिय'त्ति, जातिसरणादिना जीवादिपदार्थेषु तत्त्वतो—भावतः श्रद्धानं, 'णिव्विसमाणकाया' जे परिहारतवं करेंति, निर्विष्टः कायो यैस्ते निर्विष्टकायाः, केऽपि, परिहारतवो जेहिं कतो आसी ते निविट्ठकाया, 'पढमसमय' इति जे तेसिं चेव खीणकसायादीणं विसेसाणं पढमे समए वट्टंति, ततो बितियादिसमए वट्टमाणा अपढमसमया इति भण्णंति, तहा चरिमसमय अचरिमसमय इति, जे तेसिं चेव खीणकसायादीणं विसेसाणं अन्तसमए वट्टंति ते चरिमसमया इति, ये ततो द्विचरिमत्रिचरिमादिसमयेषु वर्त्तन्ते ते अचरिमा इति, 'वेमाणिया कप्पोववन्नगा

कल्पातीता य' तत्र कल्पशब्दः प्रकारवचनः, यत्रेन्द्रसामानिकादिप्रकाराः सन्ति ते कल्पा उच्यंते सौधर्म्मादयस्तेषु ये उत्पन्नास्ते कल्पोपपन्नाः, ते इन्द्रादयः प्रकारा न संति ते कल्पातीताः ग्रैवेयकादय इति ॥

एवं प्रज्ञापनाप्रदेशव्याख्यायां प्रथमपदव्याख्या समाप्तेति ॥

——xx——

साम्प्रतं द्वितीयमारभ्यते—अस्य चायमभिसम्बन्धः-प्रथमपदोक्तानामेव पृथिवीकायिकादीनामिह स्थाननिरूपणं क्रियते, तथा चाह-'कहि णं भंते !' इत्यादि, 'कहिं'ति कस्मिन्, णंशब्दो वाक्यालंकारार्थः 'भंते'ति भदंत इति परमगुर्वामंत्रणार्थः, बादरपृथिवीकायिकानां पर्याप्तकानां स्थानानि स्वस्थानादीनि प्रज्ञप्तानि-प्ररूपितानि ?, एवं गौतमस्वामिना प्रश्ने कृते सति भगवानाह महावीरवर्द्धमानः—'गोयमा ! सट्ठाणेणं'मित्यादि, आह-गौतमोऽपि भगवानुपचितकुशलमूलो गणधरस्तीर्थंकरभाषितमातृकापदश्रवणमात्रावाप्तप्रकृष्टश्रुतज्ञानावरणक्षयोपशमश्चतुर्दशपूर्वविद्विवक्षितार्थपरिज्ञानसमन्वित एव किमर्थमित्थं पृच्छति ?, तथाहि-न चतुर्दशपूर्वविदः प्रज्ञापनीयं किंचिदविदितमस्ति, यथोक्तं-"संखातीतेऽवि भवे साहति जं वा परो तु पुच्छेज्जा । ण य णं अणादिसेसी वियाणती एस छउमत्थो ॥१॥" अत्रोच्यते-जानन्तो वाऽन्यत्र विनेयेभ्यः प्रतिपाद्य तत्संप्रत्यय इति निमित्तं पृच्छति, सर्वत्र गणधरप्रश्नतीर्थंकरनिर्वचनरूपं वा किंचित् सूत्रमितिकृत्वा इत्थमेव रचयति, स्वल्पानाभोगसंभवाद्वा पृच्छति, उक्तं च-"न हि नामानाभोगश्छद्मस्थस्येह कस्यचिन्नास्ति । ज्ञानावरणीयं हि ज्ञानावरणप्रकृति कर्म्म ॥१॥" छद्मस्थश्चासावित्यलं प्रसङ्गेन, गमनिकामात्रसारोऽयमारंभ इति, प्रकृतं प्रस्तुमः, गोयमत्ति लोकप्रथितमहागोत्रविशिष्टाभिधायकेनामंत्रणमाह-

हे गौतम !, गौतमसमगोत्रेति भावार्थः, 'सट्ठाणेणं'ति स्वस्थानं यत्रास्ते वादरपृथिवीकायिकः पर्याप्तको निर्देशार्ह इति, यत्र वर्णादिविभागेनादेष्टुं शक्यत इत्यर्थः, उपपातसमुद्घातस्थाननिवृत्त्यर्थं स्वस्थानग्रहणं, तेन तदंगीकृत्य 'अट्ठसु पुढविसु' इत्यादि सुगमं यावत् 'उववाएणं लोगस्स असंखेज्जइभागो' उपपतनमुपपातः तेनोपपातेन, यथोक्तवादरपृथिवीकायिकपर्याप्तकस्वस्थानप्राप्त्यभिमुख्येनेत्यर्थः, लोकस्य चतुर्दशरज्ज्वात्मकस्य 'असंखेज्जइभागे'त्ति असंखेज्जइभागे, अत्र केचिदेवं व्याचक्षते–परिस्थूरऋजुसूत्रनयदर्शनेन बादरपृथिवीकायिकपर्याप्तकायुरेव विशिष्टविपाकतो वेदयंतो वादरपृथिवीकायकपर्याप्तका उच्यन्ते, ततश्चोपपातेन–उपपातमधिकृत्य 'लोयस्स असंखेज्जइभाए'त्ति यस्माद्रत्नप्रभादि स्वस्थानं लोकस्यासंख्येयभाग एव वर्त्तते, यतो रत्नप्रभा घनभावेनाशीतियोजनसहस्राधिकं लक्षं वर्त्तते, एवं शेषा अपि स्वेन घनभावेन वक्तव्याः, स्वस्थानप्राप्ताश्च तेऽधिकृतव्यपदेशभाजो भवंति, नापान्तरालगतौ, यस्मात् पर्याप्तकनामकर्म्मोदयात् पर्याप्तका, न पर्याप्तकनामकर्मबंधमात्रेणातिप्रसंगात्, स च पर्याप्तकनामकर्म्मोदयो विशिष्टः स्वस्थानप्राप्तानामेव भवति, आहारादिपर्याप्तिनिवृत्तिभिर्लक्षिष्यत इत्यर्थः, अन्ये पुनरित्थमभिदधति–स्तोकत्वादेव तेऽपान्तरालगतिपरिग्रहेऽपि लोकस्यासंख्येयभाग एवेति, तथा च समुद्घातेनासंख्येयभाग एव, वक्ष्यते च स्वस्थानातिरिक्त एव क्षेत्रे वर्त्तत इति भावनीयं, तत्त्वं तु केवलिनो विदंति विशिष्टश्रुतविदो वा, 'समुग्घातेणं लोगस्स असंखेज्जतिभागे'त्ति, हननं घातः समेकीभावे उत् प्राबल्ये एकीभावेन प्राबल्येन च घातः समुद्घातः, तदुपयोगानन्यतया आयुष्कपुद्गलानां प्रबलसातनमित्यर्थः, ततश्च समुद्घातेन–समुद्घातमधिकृत्य लोकस्यासंख्येयभाग इति, अयमत्र भावना–जे ते बादरपुढविकायपज्जत्तगा सोवक्कमाउया निरुवक्कमाउया वा तिभागावसेसाउया यदि परभवियाउयं बंधित्ता मारणंतिय-

समुग्घाएणं समोहणंति तदा निक्खित्तनियदंडा लोगस्स असंखेज्जतिभागे भवंति, ते य बादरपुढविकाइया पज्जत्तगा आउए अक्खीणे ते चेव लब्भंति, शेषं सुगमं यावत् उववाएणं सव्वलोए, समुग्घाएणं सव्वलोए, बादरपुढविकाइया अपज्जत्तया उववाएणं समुग्घाएण य सव्वलोग इति, कहं ?, भण्णति—जम्हा अपज्जत्तया अंतरा गतीए ठाणे य अपज्जत्तया चेव, अपज्जत्तयनामकम्मोदयातो, अपज्जत्तया चेव मरंतित्तिकाउं, ते य णारगदेववज्जेहिं सव्वकाएहिंतोवि उववज्जंति, अत उक्तं—उववाएणं समुग्घाएण य सव्वलोए, अण्णे भणंति—बहुत्तणओ चेव सव्वलोग इति, इह चैवंभूतया स्थापनया भावना कार्येति, अत्र प्रथमं वक्रं यदैव संहरंति केचन तदैव तद्वक्रदेशमन्ये पूरयंति, एवं द्वितीयवक्रसंहरणेऽपि, अवक्रोत्पत्तावपि प्रवाहतो भावनीयं 'सट्ठाणेणं लोयस्स असंखेज्जइभागे'त्ति यथा पर्याप्तकास्तथा भावनीयं, तन्निश्रयैवैषामुत्पत्तेः, सुहुमपुढविकाइया जे पज्जत्तगा अपज्जत्तगा ते सव्वे एगविहत्ति एकप्रकारा एव, प्रकृतं स्वस्थानादिविचारमधिकृत्यौघतः, 'अविसेस'त्ति अविलक्षणाः—विशेषरहिताः, यथा पर्याप्तकास्तथेतरेऽपि 'अनानात्वा'नानात्ववर्जिताः येष्वेवाधारभूताकाशप्रदेशेष्वेके तेष्वेवेतरेऽपीत्यर्थः, 'सव्वलोयपरियावण्ण'त्ति उपपातसमुद्घातस्वस्थानैः सर्वलोक इति भावना, पण्णत्तत्ति प्रज्ञप्ता मया अन्यैश्च ऋषभादिभिस्तीर्थकृद्भिरिति, अनेनागमस्य कथंचिन्नित्यत्वमाह, 'समणाउसो'त्ति आमंत्रणवचनं गौतमस्य, शेषं सुगमं, जाव णिव्वाघाएणं पण्णरससु कम्मभूमीसु इत्यादि, 'निव्वाघाएणं'ति भरहेरवएसु सुसमसुसमासु सुसमासु दूसमदूसमासु—अतिदुष्षमायां वाघातो भण्णति, एयासु भरेहरवएसु ण होति बादरतेउकाइयत्ति भावार्थः, शेषं सुगमं जाव तिसुवि लोगस्स असंखेज्जइभागेत्ति तिसुवि—उववायसमुग्घायसठाणेसु लोगस्स असंखेज्जइभागे वट्टंति, स्तोकत्वादिति भावना, शेषं सुगमं यावत् उववाएणं लोगस्स दो-

सुद्धकवाडेसु इत्यादि, अस्य भावना—अड्ढाइज्जेसु दीवसमुद्देसु उभयो पासिं पुव्वावरदाहिणुत्तरायते कवाडे, उड्ढं लोयंतं अधोवि लोगंतं पुट्ठे, केवलिसमुग्घातदण्डवत्, तच्छ्रेणिपतिता उपपद्यमानका अपि जीवा लभ्यंते, तेसु बादरतेउकाइयाणं संभवो, ण पुण जे बाहिं दोण्हं उद्धकवाडाणं विदिसी विस्सेणीऽवट्ठिया, उपपत्त्यर्थं गतियुक्ता अपि नोच्यन्ते बादरतेउकाइया इति व्यवहारनयदर्शनेन, व्यवहारनयस्य हि बादरतेउकाइयसट्ठाणआकाशसमश्रेणिस्थस्वस्थानप्राप्त्यभिमुखो बादरतेजस्कायिक इति व्यवह्रियते, यथा कश्चिन् मगधादिदेशात् सुराष्ट्रं प्रस्थितः गिरिनगरादिनगरे निवासं कल्पयितुकामः सुराष्ट्रापर्यन्तग्रामप्राप्तः समुत्पद्यमानेषु प्रयोजनेषु सौराष्ट्रक इति व्यवह्रियते तद्वदिहापीति,इतरश्चाथ आह ऋजुसूत्रनयदर्शनेन, विचित्रा च सूत्रस्य गतिर्भगवत इति, बादरतेउकाइएसु य उववज्जमाणो पढमे समए कवाडं ण पविसति, जाव ण पविसति ताव पुव्वभवअवत्थ एव लब्भति, अत उच्यते—उववाएणं दोसुद्धकवाडेसु तिरियलोयतत्थे यत्ति, तयोः स्थितस्तत्स्थितः, तयोः ऊर्ध्वकपाटयोर्यः स्थितस्तिर्यग्लोकस्तत्स्थः, चशब्दात्तस्मिंश्च, अन्ये तु व्याचक्षते—'तिर्यग्लोकपयट्टे(तट्टे)य'त्ति तिर्यग्लोके स्थालके च, ततश्च स्वयंभूरमणादीहिंतोवि तिरिच्छकं जे अविग्गहेणा-गच्छंति विग्गहेणवि समसेढिपवण्णगा तेऽवि घिप्पंति,इयमत्र स्थापना। समुग्घाएणं सव्वलोएत्ति—जया लोयग्गसेढीए उद्धकवा-डाणं अंतरवत्ती बादरतेउकाइएसु उववज्जिउकामो सुहुमपुढविकाइयादि मारणंतियसमुग्घाएणं समोहतो पदेसे णिच्छुभति ते य पदेसा सरीरप्पमाणमेत्तं विक्खंभबाहल्लेणं आयामेणं जाव लोयंतं फुसंति, यस्माद्वक्ष्यति ओगाहणसंठाणपदे—"पुढविकाइयस्स णं भंते ! मारणंतियसमुग्घाएणं समोहयस्स तेयासरीरस्स केमहालिया सरीरोगाहणा पण्णत्ता ?, गोतमा ! सरीरप्पमाणमेत्तं विक्खंभबाह-ल्लेणं, आयामेणं जहण्णेणं अंगुलस्स असंखेज्जभागं उक्कोसेणं लोगंते" अत उच्यते—समुग्घाएणं सव्वलोग इति, अन्ये त्वभिदधति—

तेजस्कायिकसमुद्घातमवधिकृत्य लोकापूरणमविरुद्धं, तेषां सर्वत्र सूक्ष्माणुत्पत्त्या समुद्घातसंभवात्, तथा हि प्रथमव्याख्यापक्षेऽपि विग्रहे स्वस्थानपरित्यागमंतरेण लोगापूरणं न संभवति, इहापि स्वस्थानपरित्यागे तेजस्कायिकसमुद्घाते तुल्यमेव, न चेत्थमपि कश्चिद् दोषो लक्ष्यते, अपि तु निरुपचरिततेजस्कायिकसमाश्रयणाद् गुणः, इह च यदि समुद्घातेनैव स चान्यत्रोत्पाद्येत ततः प्राक्तने शरीरे परित्यक्तेऽपि विग्रहगतिसमापन्नो न तावदाहारको भवति यावत् सर्वात्मप्रदेशैरुपपातक्षेत्रं न प्रविष्ट इति, सट्ठाणेणं लोगस्स असंखेज्जइभागे-पंच भरहादीणि सट्ठाणं एयं लोयस्स असंखेज्जइभागे, पज्जत्तगनिस्साए अपज्जत्तगा वक्कमंतित्ति वयणाओ सट्ठाणं तेसिंपि पंच भरहादीणि। बादरवाउकाइयाणं पज्जत्तयाणं सट्ठाणं घनवातादिषु, तत्र निष्कुटो गवाक्षवन्नरकादिदेशः छिद्राणि-नरकविमानानामवकाशान्तराणि, तीसुवि लोयस्स असंखेज्जेसु भाएसु, सुषिरबहुत्वाद्, यत्र च शुषिरं तत्र वायोः संभव इति, बादराणां अपज्जत्तया उववाएण य समुग्घाएण य सव्वलोए, कहं ?, नारकदेववर्ज्यकायेभ्य उपपातसंभवात्, अपज्जत्तगत्तं च आंतरगतीएवि लब्भइत्तिकाउं। बादरवणस्सतिकाइया पज्जत्तया उववाएणं समुग्घाएण य सव्वलोए, कहं ?, भणाति-जम्हा तेसिं सट्ठाणं घणोदहिआदि भणियं, तत्थ य बायरनिगोदाणं संभवो सेवालादीणमत्थित्ति, तत्थ सुहुमनियोदाणं अंतोमुहुत्तं भवट्ठिती, ते य बादरणिओएसु पज्जत्तएसु उववज्जमाणा णियउववाएणं सव्वलोए लब्भंति, सुहुमा य सव्वलोएत्ति वयणातो, अत उच्यते-उववाएणं सव्वलोए, तत्थ समुग्घाएणं सव्वलोए कहं ?, तदा बादरनियोदवणस्सतिकाइया सुहुमनिओदत्ताए आउं बंधेत्ता मारणंतियसमुग्घाएणं समोहया पदेसे निच्छुब्भंति, ते उ बादरनिओदपज्जत्तयआउए अक्खीणे ते चेव लब्भंतित्तिकाउं समुग्घाएणं सव्वलोए। बेइंदिया उड्ढलोयतदेकदेसभागे-मन्दरादिवाप्यादिषु अहोलोगतदेकदेसभागे-अहोलोगियगामकूवतलागादिषु,

शेषं गतार्थं । काऊअगणिवण्णाभा, कृष्णोऽग्निर्लोहादीनां ध्मायमानानां । असीउत्तरजोयणसत इत्यादि, असीयं जोयणसतसहस्सं बाहल्लं जीसे पुढवीए सा पुढवी आसीउत्तरसहस्सबाहल्ला । मणुस्साहिगारे समुग्घाएणं सव्वलोएत्ति जं भणितं तं केवलिसमुग्घायं पडुच्च । उक्कीणंतरा गंभीरा गंभीरखायपरिहा जेसु ताणि भवणाणि उक्कीणंतरगंभीरखातपरिहाणि, उक्किणंतरा इति खायाणं फलिहाणं च अंतरे पाली अत्थित्ति भणितं होति, खायफलिहाणं विसेसो–फरिहा उवरि विसाला अध संकुचिया, खायं तु सममेव । अडतालकोट्ठगयरइयत्ति अडयालीसभेदभिन्नविचित्तछंदगोपुरकलिता, अण्णे भणंति–अडयालीससद्दो किल पसंसावाचको, एवं मालासुवि भाणियव्वं, लाउल्लोइयमहिताइंति लाइतं नाम जं भूमीए छगणाइणा लिंपणं, उल्लोइयं पुण कुड्डमालाणं सेडियादीहिं संमट्ठीकरणं, लाउल्लोइयमहियं लाउल्लोइयं तेण महिता–पूजिताणित्ति लंबितानि लाउल्लोइयमहिता । आसत्तोसत्त इत्यादि, आसत्त इति अवाङ् अधोभूमौ सक्तानि भूमीए लग्गाणि, उसत्त इति ऊर्ध्वं सक्तः–लीनः उल्लोयतलेणं अंतराले आसत्तोसत्ताणि विपुलाणि महति वट्टत्ति–वृत्तानि वग्घारियाणित्ति लंबितानि मल्लदाम इति फुल्लदामाणि कलावफुल्लदामाणि, कलाव इति समुदायाः, ण एक्केक्कं, पासादीया–मनःप्रसादकराः, द्रष्टव्या–दर्शनीयाः,चक्षुषा पश्यन् श्रमं न गच्छतीत्यर्थः, अभिरूपाः–कमनीयाः, प्रतिरूपा इति द्रष्टारं द्रष्टारं प्रति रमणीयाः प्रतिरूपाः, न एकस्य कस्यचित्, भूसणेसु णागफणादीणि चित्ताणि, परिवारादिसम्पद् ऋद्धिः, द्युतिः शरीरच्छाया, बलं शक्तिविशेषः, पराक्रमकृतं यशः, सापानुग्रहसामर्थ्यमनुभावः, शेषं गतार्थं, णवरं साणं साणंति स्वकीयानां२, वामेयकुंडलधरा एक्ककण्णावतंसकुंडलधारिणो, शेषं सुगमं, यावत् ईसीपब्भाराए पुढवीए बहुमज्झे देसभाए इत्यादि, अट्ठजोयणिए खेत्ते आयामविक्खंभेणं अट्ठजोयणादि, बाहल्लेणं घट्ठ-

त्तणेणंति वुत्तं भवति इति, एयस्स इमा ठवणा। 'तिण्णि सया तेत्तीसा' इत्यादि, पंचधणुसतपमाणाणं हवंति,आह–यदि एवं मरुदेविसामिणीए अहिगयराए होयव्वं, जओ समहियपंचधणुसयाइं पणवीसुत्तराइं, उक्तं च–"नवधणुसयाइं" गाहा (आव०)॥ ततः किमिति चेदुच्यते–इत्थीणंपि संघयणादीहिं कुलगरतुल्लत्तणं, तो भणियं च 'संघयणं संठाणं उच्चत्तं चेव कुलगरेहिं सम'मित्यादि, आचार्य आह–सच्चं भणियं, बाहुल्यमाश्रित्य, तत्त्वतस्तु मनागूना एव भवंति इति, योषित इति न दोषः, गजस्कन्धासीनायाश्च मुक्तिप्राप्तेरित्यदोषः,'चत्तारि य' इत्यादि, सत्तहत्थाणं। 'एक्का य' इत्यादि, दुहत्थाणं कुम्मयसुताईणं,संठाणमणित्थत्थं इदंप्रकारमापन्नमित्थं इत्थं तिष्ठतीति इत्थस्थं न इत्थस्थमनित्थस्थं। फुसति अणंते सिद्धे गाहा॥ ठवणा। शेषं सूत्रसिद्धं॥

प्रज्ञापनाप्रदेशव्याख्यायां द्वितीयपदव्याख्या समाप्ता॥

———*———

साम्प्रतं तृतीयपदमारभ्यते,अस्य चायमभिसंबंधः–प्रथमपदे प्रज्ञापितानां पृथिवीकायिकादीनां द्वितीयपदे च स्वस्थानादिविभागतो निरूपितानां दिगादिविभागेनाल्पबहुत्वसंख्यानिरूपणार्थमिदं प्रक्रम्यते, तथा चाह–'दिसाणुवाएणं सव्वत्थोवा जीवा पच्चत्थिमेण'मित्यादि, इह दिसोऽनेकप्रकाराः प्रथमाङ्गे व्यावर्णिताः, तत्र सूर्योदयोपलक्षिता पूर्वा,शेषाश्च पूर्वदक्षिणादिकास्तदनुक्रमेण वेदितव्याः, नामानि चासां–"इंदग्गेयी जम्मा य णेरती वारुणी य वायव्वा। सोम्मा ईसाणावि य विमला य तमा य बोद्धव्वा ॥१॥" आसां च तिर्यग्लोकमध्यगतादष्टप्रदेशिकाद् रुचकात् प्रभवोऽवगन्तव्यः, यथोक्तं–"अट्ठपदेसो रुयगो तिरियं लोगस्स मज्झयारंमि। एस पभवो दिसाणं एसेव भवे अणुदिसाणं ॥१॥" दिक्ष्वनुपातो दिगनुपातस्तेन–दिग्विभागेन–दिग्वशेन

दिशोऽधिकृत्येत्यर्थः, सर्वस्तोका जीवाः पश्चिमेन–पश्चिमायां दिशि, इदं चाल्पबहुत्वं बादरानधिकृत्य, न सूक्ष्मान्, यतस्ते सर्वलोकापन्नाः सर्वत्र प्रायसस्समा एवेति, तत्र सर्वस्तोका जीवाः पश्चिमेनेत्यत्र भावना–इह सर्वबहवो वनस्पतय इतिकृत्वा यत्र ते बहवः सन्ति तत्र बहुत्वं, तेषां च बहुत्वं जत्थ आउक्काओ तत्थ णियमा वणस्सइकाइया इति, पणगसेवालहढादी बादरावि होज्जा, सुहुमा आणागेज्झे अगेज्झे मंसचक्खुणा॥ यथोक्तमनुयोगद्वारेषु "ते णं वालुगा सुहुमस्स पणगजीवस्स सरीरोगाहणाहिंतो असंखिज्जगुणा" इति, उदकं च बहुयं समुद्देसु दीपद्विगुणविष्कम्भेषु, 'प्राचीप्रतीच्योश्च दिशोः समुद्रेषु चन्द्रसूर्यद्वीपाः संति, यत्र च ते अवगाढास्तत्रोदकाभाव इति, तदभावाच्च वनस्पतिकायाभाव इति, प्रतीच्यां तु गोतमद्वीपो लवणसमुद्रेऽप्यधिकस्तत्र चोदकाभावादल्पतरा एव जीवा पच्छिमेणंति, पूर्वस्यां तु तदभावात्तावतैव विशेषेणातिरिच्यंत इति, दक्षिणस्यां तु चन्द्रसूर्यद्वीपाभावात् पूर्वतो विशेषाधिका इति, उदीच्यां तु संख्येययोजनिकेषु द्वीपेषु माणसो सरो संखिज्जाओ जोयणकोडीओ आयामविक्खंभेणं अतस्तत्र दक्षिणतोऽपि उत्तरस्यां विशेषाधिकाः, एतदेव प्रयोजनं आउकाइयवणस्सतिकाइयबेइंदियतेइंदियचउरिंदियपंचिंदियतिरिक्खजोणियाणं चाल्पबहुत्वस्य, तत्र संखादिद्वीन्द्रियप्राभूत्यात्, पिपीलिकादित्रीन्द्रियप्राभूत्यात्, भ्रमरादिचतुरिन्द्रियप्राभूत्यात्, मत्स्यादिपंचेन्द्रियबाहुल्याच्च, एवं सामान्येन दिगनुपातेन जीवानामल्पबहुत्वं प्रतिपादितं। इदानीं विशेषेणोच्यते–'सव्वत्थोवा पुढविकाइया दाहिणेण'मित्यादि, जत्थ जलं न बहुलं तत्थ पुढवी बहुगा, जत्थ सुसिरं तत्थ सव्वे थोवा, तेण दाहिणेण थोवा, जम्हा बहुतरगा भवणा णरगावासा य दाहिणेणंति, जे पुण उत्तरेणं भवणा णरगावासा य ते थोवा, तेण उत्तरेण विसेसाहिया, पुव्वेण विसेसाहिया रविससिदीवे अहिकिचा, अवरेणं विसेसाहिया, गोतमदीवमहिकिचा, आह–यदि गोतमदीवो समतिरित्तो पच्छिमाए चेव दिसाए

अहोलोइयगामा अतिथत्तिकाउं तुल्ला चेव, ण पुण विसेसाहिया, उच्यते, नैतदेवं, कुतः ?—जतो अहोलोइयगामावगाहो णव जोयणसताणि, दीवस्स पुण छावत्तरं जोयणसहस्समुच्चत्तं, विक्खंभो से बारसजोयणसहस्साति, तेणं अहोलोइयछिद्दे पक्खिप्पितो समाणोऽत्तिरित्तो भवति, न तुल्लो, तेण विसेसाहिया पुढविकाइया। आउकाइया जहा ओहिया, सव्वत्थोवा तेउकाइया दाहिणुत्तरेणमित्यादि, कथं ?, यत्र मनुजास्तत्रैव बादरतेजस्कायिकानां सम्भवः, यस्माच्चेषां पाकारंभोऽस्ति, अतः स्तोकास्तेजस्कायिकाः (कदाइ) भरतैरावतेषु चाभावात्, पुरस्तात् संख्येयगुणाः, अवरेणं विसेसाहिया, अहोलोइयगामे पडुच्च, यत्र शुषिरं तत्र वायुः, यत्र घनं तत्र नास्ति, तस्माद् घनत्वात् पूर्वस्यां दिशि अल्पा वायवः, अपरस्यां विशेषाधिकाः, अधोलौकिकग्रामसंभवात्, उत्तरस्यां विशेषाधिका भवनबहुत्वाच्छुषिरबहुत्वमितिकृत्वा, ततोऽपि दक्षिणस्यां दिशि विशेषाधिकाः, भवनबहुत्वादेव। वणस्सइकाइया जहेवोहिया जीवा। नारकसूत्रे नारका दक्षिणेनासंख्येयगुणाः, पापोदयात् कृष्णपाक्षिकत्वाद् बहव उत्पद्यन्त इति, शेषं गतार्थं। मनुष्यसूत्रे उपपत्तिर्यथा बादरतेउकाइयाणं। भवनवासिसूत्रे पुरत्थिमपच्चत्थिमेणं भवणा थोवा, तन्निवासिनोऽपि भवनवासिनो देवाः स्तोकाः, उत्तरेण असंखेज्जगुणाः, यस्मात् स्वस्थानमेव नन्वेषां, दक्षिणस्यां संख्येयगुणाः, भवनबहुत्वात्, यस्मान्निकाये२ चत्वारि भवनशतसहस्राण्यतिरिच्यंते। व्यन्तरसूत्रे यत्र शुषिरं तत्र व्यन्तराः प्रचरंति, यत्र पुनर्घनं तत्र न, तस्माद् घनत्वात् पूर्वस्यां दिशि सर्वस्तोकत्वं, अपरस्यां दिशि विशेषाधिकाः, अधोलोकिकग्रामसंभवात्, उत्तरस्यां विशेषाधिकाः, नगरावासबहुत्वात् स्वस्थानत्वाच्च, ततोऽपि दक्षिणेन विशेषाधिकाः, नगरावासबहुत्वादेव। ज्योतिष्कसूत्रे प्राचीप्रतीच्योः स्तोकाः ज्योतिष्काः, यस्माचन्द्रादिद्वीपेषूद्यानकल्पेषु अल्पा राजधान्य इति, दक्षिणस्यां विशेषाधिका विमानबहुत्वात् कृष्णपाक्षिकदक्षिणगामित्वाच, उत्त-

रस्यां विशेषाधिकाः, यस्मात् मानसे सरसि बहवो ज्योतिष्काः क्रीडनस्थानव्यापृता नित्यं समासते, मानससरसि च ये मत्स्यादयो जलचरा आसन्नविमानदर्शनकृतनिदानाः किंचित् व्रत प्रतिपद्य अनशनादि च कृत्वा तत्रोपपद्यंते । सव्वत्थोवा देवा सोहम्मे कप्पे पुरत्थिमपच्चत्थिमेणं, कहं ?, भण्णति-जे आवलियपविट्ठा विमाणा ते चउसुवि दिसासु तुल्ला, जे पुण पुप्फावकिन्ना ते दाहिणेणमुत्तेरण य बहू असंखिज्जवित्थडा य, तेण पुरत्थिमपच्चत्थिमेणं थोवा, उत्तरेणं असंखेज्जगुणा, पुष्पावकीर्णकविमानबहुत्वात् असंख्येययोजनविस्तृतत्वाच्च, दक्षिणस्यां दिशि विशेषाधिकाः,दाहिणगामिए णं कण्हपक्खिएत्तिकाउं, सुक्कपक्खिया अप्पा, एवं जाव माहिंदो, बंभलोए सव्वत्थोवा पुरत्थिमपच्चत्थिमउत्तरेणं,जण्णं कण्हपक्खिया तिरिक्खजोणिया दाहिणेण बहवो उववज्जंति, सुक्कपक्खिया पुण उत्तरेण, तेण दाहिणेण असंखेज्जगुणा, एवं जाव सहस्सारो, शेषं गतार्थं, आणयादिसु बहुसमा, कहं ?, भण्णति-मणुस्सा चेव तेसु उववज्जंतित्तिकाउं । सिद्धसूत्रे सिद्धा मनुष्यवत्, कथं ?, जम्हा पंचसु भरेहरवएसु सिज्झंतित्ति तेण सव्वत्थोवा सिद्धा उत्तरदाहिणेणं, पुरत्थिमेणं संखिज्जगुणा, कहं ?, पंच पुव्वविदेहाणि भरहेरवएहिंतो संखेज्जगुणवित्थडाणि, पच्चत्थिमेण विसेसाहिया, अहोलोइएसु गामेसु सिज्झंतित्तिकाउं । अष्टगतिसमाससूत्रे स्त्रीभ्यो मनुष्याः असंखेज्जगुणाः, सम्मूर्च्छनजानपि गृहीत्वा, नपुंसकवेदोऽत्र न विवक्ष्यते, ते च वान्तादिषु निर्धमनान्तेषु जायंते असंख्येयाः । इंद्रियसूत्रे एकेन्द्रियादिभ्यः पंचेन्द्रिया अल्पतराः, कथं ?, यस्मात् पर्याप्तापर्याप्तकसूत्रे शेषकायेभ्यः अल्पतरा एव पठिता इति, एकेन्द्रियेभ्यः सेन्द्रिया विशेषाधिकाः, केन विशेषेण ?, द्वीन्द्रियादिना, तत्र स्थिता एवैकेन्द्रिया इति । पर्याप्तापर्याप्तकसूत्रे चतुरिन्द्रिया अल्पायुषः पर्याप्ताश्च न चिरमासते अपर्याप्ताश्च बहवो म्रियंते, पंचेन्द्रिया विपर्ययेण, तेन स्तोकाः, इयमत्र भावना-इंद्रियभेदांस्त्रिधा पाटिकासु स्थाप-

यित्वा मज्झिआए ओहिया, उवरिमाए अपज्जत्तगा, हिट्ठिमाए पज्जत्तगा, एवं ठाविऊण ततः अल्पबहुत्वं साध्यमिति, एत्थ पुण पंच अप्पबहुभेदा, तंजहा–ओहियाणं१ अपज्जत्ताणं२ पज्जत्ताणं३ पत्तेयं अपज्जत्तपज्जत्ताणं४ समुदियाणं पज्जत्तापज्जत्ताणं५, एत्थ पुण पत्तेयं पज्जत्तापज्जत्तठितीए भणियं सव्वत्थोवा एगिंदियापज्जत्ता, पज्जत्ता संखिज्जगुणा, एवं सुहुमेगिंदिए पडुच्च दट्ठव्वं, बादराणं पुण पज्जत्तगेहिंतो अपज्जत्तगा चेव असंखेज्जगुणा भवंति, जतो भणियं पण्णवणापदे–"पज्जत्तगनिस्साए अपज्जत्तगा वक्कमंति, जत्थ एगो तत्थ नियमा असंखिज्ज"त्ति, सुहुमा य सव्वलोए, अतो य पज्जत्तगबहुत्तणओ उभओऽवि पज्जत्तगा संखेज्जगुणा, सइंदियावि संखेज्जगुणत्ति, तदा ओहिया अपज्जत्तसइंदिया–एगिंदिया बेइंदिया तेइंदिया चउरिंदिया पंचिंदिया चेव अपज्जत्ता, अपज्जत्ता, पज्जत्ता अपज्जत्ता सो (संखिज्जगुणा) वक्ष्यति च सुहुमाणं पज्जत्ता अपज्जत्ता, अणिंदियचिंताए–सव्वत्थोवा सुहुमा अपज्जत्ता, पज्जत्ता संखिज्जगुणत्ति, अलमतिप्रसंगेन, अवचूर्णिकामात्रमेतदिति, इह चेयं स्थापना, एवं कायादिष्वपि अल्पबहुत्वं वाच्यं ऊर्ध्वाधोविन्यासेन। 'एतेसिणं भंते! मणजोगीण' मित्यादि, ये संज्ञिनः पर्याप्तास्ते मनोयोगिन इति तेन ते स्तोकाः, द्वीन्द्रियादयो वाग्योगिनस्तेन असंख्येयगुणाः, सिद्धा अयोगिनस्तेन तेऽनन्तगुणाः, अनन्तकालचितत्वात्, काययोगिनोऽनन्तगुणाः, वनस्पतिकायमधिकृत्य, यद्यपि निगोदजीवानां अनन्तानामौदारिकमेकं शरीरं तथापि कार्मणकाययोगं प्रति अनन्तगुणत्वं, सजोगि विसेसाहिया, जेण मणजोगिवइजोगि तेऽवि तगं चेव कायजोगिरासिं मज्झे छूढा तेण विसेसाहिया। इत्थिवेदादिसूत्रे सर्वस्तोकाः पुरुषवेदाः, कथं?, यस्मात् संज्ञिनः समनस्का एव तिर्यङ्मनुष्या देवाश्च पुरुषवेदा इति, स्त्रियः संख्येयगुणाः, यस्मा-जीवाभिगमेऽभिहितं–तिरिक्खजोणियपुरिसेहिंतो तिरिक्खजोणियइत्थीओ तिगुणाओ तिरूवाहियाओ, तहा मणुस्सपुरिसेहिंतो

मंत्रणे, केवइयं—कियंतं कालं समयादिलक्षणं विरहितेति—शून्या, केन ?—उपपातेन, तत्रोपपतनमुपपातः, तदन्यगतिकानां सत्त्वानां नारकत्वेन उत्पाद इत्यर्थः, तेन, प्रज्ञप्ता भगवता अन्यैश्च ऋषभादिभिरिति, 'गोयमा ! जहण्णेणं एक्कं समय'मित्यादि, प्रायो निगदसिद्धं, णवरं तिरियगईए गब्भवक्कंतियपंचिंदियतिरिक्खजोणीए अहिकिच्च विण्णेयं, मणुयगतीएवि गब्भवक्कंतियमणुस्से अहिकिच्चत्ति, देवगइएसु ण सव्वे, भवणवणजोइवेमाणिएत्ति, तथा 'सिद्धिगती णं भंते !'इत्यादि, तत्र सिध्यंति—निष्ठितार्था भवंत्यस्यामिति सिद्धिः—लोकान्तक्षेत्रलक्षणा, तथा चोक्तं—'इह बोंदिं चइत्ताणं, तत्थ गंतूण सिज्झति' गम्यत इति गतिः कर्म्मसाधनः, सिद्धिरेव गम्यमानत्वात् गतिः सिद्धिगतिः, सिज्झणयाएत्ति सिद्ध्यमानतयेति, एतद् उपपातव्यवच्छेदार्थं, सकर्म्मकाणां हि उपपात इतिकृत्वा, निर्वचनं सूत्रसिद्धं, एतदुद्वर्त्तनाविरहकालोऽप्यवगंतव्य इति, एवं तावत् सामान्येन नरकादिगत्यपेक्षया जघन्येतरभेदभिन्न उपपातादिविरहकालः प्रतिपादितः। साम्प्रतं सामान्यस्य विशेषानुगतत्वाद्विशेषाणां च सामान्याश्रयत्वाद्विशेषाभिधानार्थः प्रश्नः, 'रयणप्पभापुढविणेरइयाण'मित्यादि, तत्रेह रयणप्पभापुढविणिरयगई णं भंते ! केवइयं कालं विरहिया उववाएण'मित्येवं वक्तव्ये 'रयणप्पभापुढविनेरइयाणं भंते !' इति यदुक्तं तदौदयिकभावविध्युपदर्शनार्थं, उक्तं च—'ओदइए दुविहे पन्नत्ते, तं०—उदये य उदयणिप्फण्णे य' तत्रोदयनिष्पन्नमधिकृत्य सूत्रोपन्यासः, जीवोदयनिप्फण्णे नेरइए तिरिक्खजोणिए इत्यादिवचनात्, अत्र बहु वक्तव्यं तत्तु नोच्यते ग्रन्थविस्तरभयादप्रस्तुतत्वाच्च, शेषं सूत्रसिद्धमेव, णवरं सुद्धओदगो भणति—ण य रयणप्पभादिसु एक्काएवि पुढवीए बारसमुहुत्तिगो परमो उववायविरहकालो भणितो, अविय चउव्वीसादि छम्मासा अवसाणातो, कहं पत्तेयमेगविसेसेऽवि अविज्जति सामण्णगतीए सो भविस्सति ?, उच्यते—सर्वग्रहणादिति, एत्थ दिट्ठंतो—जहा एगंमि नगरे सत्त महापाडगा, तत्थ एगंमि पाडगे ज-

हण्णेण समयंतरेण उक्कोसेण चउवीसेहिंतो मुहुत्तेहिं इत्थिया दारगं पसवति, बीयादिसु जहण्णं तुल्लमेव, उक्कोसेणं सुत्तभणियं सत्त-रत्तादि, जइ य एवं तहावि णगरं पडुच्च बारस मुहुत्ता लब्भंतित्ति भावनीयं, येषां पुनर्जीवानां नारकादिगतिषु विविध उपपातो वर्णितः तैः जीवैः पूर्वभव एव वर्त्तमानैरायुर्बद्धं सत् पश्चादुपपातः, कियति च पूर्वभवायुषि शेषे बद्धमित्यतः प्रश्नः—नेरइया णं भंते ! कतिभागावसेसाउया परभवियाउयं पकरेंतीत्यादि गतार्थं यावत् कतिविहे णं भंते ! आउयबंधे पन्नत्ते इति, तत्र नरकाद्यायुष्ककर्म्मनिषेधककाल एव तत्सहभाविनीनां कर्म्मोत्तरप्रकृतीनां जातिनामगतिनामअवगाहनाप्रकृतीनामपि निषेकं करोति, निषिक्तमिति च निधत्तं, कर्म्मपुद्गलानां प्रतिसमयानुभवनरचनेत्यर्थः, यस्मादुक्तं कर्म्मप्रकृतिसंग्रहणिकायां स्थितिबंध-प्ररूपणाधिकारे—चत्वार्यनुयोगद्वाराणि—ठितिबंधट्ठाणपरूवणा णिसेगट्ठाणपरूवणा आहाकंडगपरूवणा अद्धाच्छेद इति, तत्थ निसेग-परूवणत्थं इमा गाहा 'मोत्तूण सगमबाहं पढमाएँ ठितीएँ बहुतरं दव्वं। सेसे विसेसहीणं जावुक्कोसंति सव्वासिं ॥१॥" अतः उ-च्यते नारकाद्यायुष्कनिषेककाल एव तत्सहभाविनीनां नामकर्म्मोत्तरप्रकृतीनामपि निषेकं करोतीति, अत एव चोक्तं निर्वचनवा-क्ये—छव्विहे आउयबंध इति, जातिनामणिहत्ताउयमित्यादि, अथ किमर्थं पुनर्जात्यादिनामकर्म्मणा आयुर्विशिष्यते ?, उच्यते—आ-युष्कस्य प्राधान्योपदर्शनार्थं, यस्मान्नारकायुरुदये सति जात्यादिनामकर्म्मणामुदयो भवति, नारकादिभवोपग्राहकं च आयुरेव, यस्मात् पन्नत्तीए भणियं—"नेरइए णं भंते ! णेरइएसु उववज्जति ? अणेरइए य नेरइएसु उववज्जति ?, गोयमा ! णेरइए नेरइएसु उववज्जति, नो अनेरइए नेरइएसु उववज्जइ" एतदुक्तं भवति—नारकायुःप्रथमसमयसंवेदनकाल एव नारक इत्युच्यते, तत्सहचारिणां च पंचेन्द्रियजात्यादिनामकर्म्मणामप्युदय इति, तत्र जातिरेकेन्द्रियजात्यादि, गतिर्नारकादि, स्थितिरिति यत् स्थातव्यं तेन भावेन,

अवगाहना येष्वाकाशप्रदेशेषु नारकादीनां वैक्रियादिशरीरमवगाढं,पदेसनिहत्ताउए प्रदेशानां तथा सम्बन्धः,अनुभागो विपाक इति, इदानीं स पुनर्जात्यादीनामायुर्बन्धः कियद्भिराकर्षैरुपात्तानां कर्म्मपुद्गलानां निधत्तीभवतीत्यतः सामान्यप्रश्नः–जीवा णं भंते ! जातिनामनिहत्ताउयं कतिहिं आगरिसेहिं पगरेंतीत्यादि, तत्र आकर्षो नाम कर्म्मपुद्गलोपादानं, यथा गावी पाणियं पीयंती भएण पुणो२ आवंहति, एवं जीवो तिव्वेण आउयबंधअज्झवसाणेणं एक्कम्मि चेव जातिणामणिहत्ताउयादि पगरेति, विपाक इति, मंदेणं दोहिं तीहिं वा, मंदतरेण तीहिं चउहिं वा, मंदतमेणं पंचहिं छहिं सत्तहिं अट्ठहिं वा, शेषं गतार्थं, अयं चैकाद्याकर्षनियमो जात्यादिनामकर्म्मणामायुर्बंधकाल एव बध्यमानानां, न शेषकालं, आयुर्बन्धपरिसमाप्त्युत्तरकालमपि बन्धः, ध्रुवबन्धिनीनां च ज्ञानावरणादिप्रकृतीनां प्रतिसमयमेव निवृत्तिर्भवति, एतास्तु परावृत्य बध्यंत इत्यलं प्रसंगेन।

इति श्रीप्रज्ञापनाप्रदेशव्याख्यायां षष्ठपदव्याख्या समाप्तेति।

———*———

इदानीं सप्तममारभ्यते, अस्य चायमभिसंबंधः–इहानन्तरपदे सत्त्वानामुपपातविरहादयः प्रतिपादिताः, इदानीं नारकादिभावेनोपपन्नानामाहारशरीरेन्द्रियप्राणापानभाषामनःपर्याप्तानां यथासंभवमुच्छ्वासनिश्वासक्रियाविरहकालपरिमाणावधारणार्थं चिन्ता, तत्रेदं सूत्रम्–'णेरइया णं भंते ! इत्यादि,' प्रायो निगदसिद्धं, नवरं यदेवोक्तं आणमंति य तदेवोक्तं ऊससंति तथा पाणमंति तदेव नीससंति,अण्णे भणंति–आणमंति पाणमंति चेत्यनेनाध्यात्मक्रिया परिगृह्यते, ऊससंति वा णीससंति वेत्यनेन बाह्येति, पुढविकाइया विमायाए विषमा मात्रा विमात्रा, अनियतविरहकालपरिमाणोच्छ्वासेत्यर्थः, देवानां यो यथा महायुस्तस्य तथा

महानुच्छ्वासक्रियाविरहकालः दुःखरूपत्वादुच्छ्वासक्रियाया इति ।

इति श्रीप्रज्ञापनाप्रदेशव्याख्यायां सप्तमपदव्याख्या समाप्तेति ।

———*———

इदानीमष्टममारभ्यते, अस्य चायमभिसम्बन्धः–इहानन्तरपदे सत्त्वानामुच्छ्वासपर्याप्तिनामकाययोगाश्रया क्रिया विरहाविरहकालेनोक्ता, अधुना वेदनीयमोहनीयोदयाश्रयान् ज्ञानदर्शनावरणक्षयोपशमाश्रयांश्च आत्मपरिणामविशेषानेवाधिकृत्य सामान्यप्रश्नमाह–कति णं भंते ! सण्णाओ इत्यादि, तत्र संज्ञा आभोग इत्यर्थः,मनोविज्ञानं इत्यन्ये, संज्ञायते वा अनयेति संज्ञा–वेदनीयमोहनीयोदयाश्रया ज्ञानदर्शनावरणक्षयोपशमाश्रया च विचित्रा आहारादिप्राप्तये क्रियेत्यर्थः, सा चोपाधिभेदाद्भिद्यमाना दशप्रकारा भवति, तद्यथा–आहारसंज्ञेत्यादि, तत्र क्षुद्वेदनीयोदयाद् कवलाद्याहारार्थं पुद्गलोपादानक्रियैव संज्ञायते अनयेत्याहारसंज्ञा, तथा भयवेदनीयोदयाद् भयोद्भ्रान्तस्य दृष्टिवदनविकाररोमांचोद्भेदार्था विक्रियैव संज्ञायतेऽनयेति भयसंज्ञा, तथा पुंवेदोदयान्मैथुनाय स्त्र्यालोकनप्रसन्नवदनमनःस्तम्भितोरुवेपथुप्रभृतिलक्षणा विक्रियैव संज्ञायते अनयेति ( मैथुनसंज्ञा,चारित्रमोहविशेषोदयात् धर्मोपकरणातिरिक्ततदतिरेकस्य वा आदित्साक्रियैव) परिग्रहसंज्ञा, तथा क्रोधोदयात् तदाशयगर्भा पुरुषमुखनयनदंतच्छदस्फुरणचेष्टैव संज्ञायतेऽनयेति क्रोधसंज्ञा, तथा मानोदयादहंकारात्मिकोत्सेकादिपरिणतिरेव संज्ञायतेऽनयेति मानसंज्ञा, तथा मायोदयेनाशुभसंक्लेशादनृतभाषणादिक्रियैव संज्ञायतेऽनयेति मायासंज्ञा, तथा लोभोदयाल्लालसान्विता सचित्तेतरद्रव्यप्रार्थनैव संज्ञायतेऽनयेति लोभसंज्ञा, तथा लोभोदयोपशमाच्छब्दाद्यर्थगोचरा सामान्यावबोधक्रियैव संज्ञायते अनयेति ओघसंज्ञा, तथा

तद्विशेषावबोधक्रियैव संज्ञायते अनयेति लोकसंज्ञा, ततश्चौघसंज्ञा दर्शनोपयोगः लोकसंज्ञा तु ज्ञानोपयोग इति, व्यत्ययमन्ये, अन्ये पुनरित्थमभिदधते-सामान्यप्रवृत्तिरोघसंज्ञा, लोकदृष्टिर्लोकसंज्ञा, एताश्च सुखप्रतिपत्तये स्पष्टरूपाः पंचेन्द्रियानधिकृत्योक्ताः, एकेन्द्रियादीनां तु प्रायो यथोक्तक्रियानिबंधनकर्मोदयादिपरिमाणरूपा एवावगंतव्या इति, उक्तं च-"चउहिं ठाणेहिं आहारसण्णा समुप्पज्जति, तं०-ओमकोट्ठयाए छुहावेयणिज्जस्स कम्मस्स उदयेणं मतीए तदट्ठोवओगेणं, चउहिं ठाणेहिं भयसण्णा समुप्पज्जंति, तं०-अवचियमंससोणिययाए मोहणिज्जस्स कम्मस्स उदएणं मतीए तदट्ठोवयोगेण य, चउहिं ठाणेहिं मेहुणसण्णा समुप्पज्जंति, तं०-चियमंससोणिययाए मोहणिज्जस्स कम्मस्स उदएणं मतीए तदट्ठोवओगेणं, चउहिं ठाणेहिं परिग्गहसण्णा समुप्पज्जति,तं०-अविमुत्तयाए लोभवेयणिज्जस्स कम्मस्स उदएणं मतीए तदट्ठोवओगेणं, कोहादिसण्णा कोहादिवेयणिज्जोदयओ भवंति, तहा नेरइया उस्सण्णकारणं पडुच्च भयसण्णोवउत्तत्ति, अत्र बहु अल्पं बाह्यकारणं प्रतीत्येति, भावं पडुच्च आहारसण्णोवउत्ता इत्यादि, इहान्तरानुभवभावः संतिभाव इत्युच्यते, ततश्चाल्पबहुत्वचिंतायां परिग्गहसण्णोवउत्ता संखेज्जगुणत्ति यदुक्तं तदप्यविरुद्धं, सरीरकुंतादिसु प्रभूततराणां परिग्रहसंज्ञासद्भावादिहार्थार्थमेव भयसंज्ञासंभवाद् ,एवमन्यत्राप्युक्तानुसारतो भावनीयमिति ।

इति श्रीप्रज्ञापनाप्रदेशव्याख्यायां अष्टमपदव्याख्या समाप्तेति !

———*———

साम्प्रतं नवममारभ्यते, अस्य चायमभिसम्बन्धः-इहानन्तरपदे सत्त्वानां संज्ञापरिणामाः प्रतिपादिताः, साम्प्रतं योनयः प्रतिपाद्यंते, तत्रेदमादिसूत्रं-'कतिविहा णं भंते! जोणी'त्यादि, तत्र योनिरिति कः शब्दार्थः?, यु मिश्रणे, युवंत्यस्यां जीवा

इति योनिः-तैजसकार्मणशरीरवन्तः सन्तः औदारिकवैक्रियशरीरयोग्यस्कन्धसमुदायेन मिश्रीभवन्तीत्यर्थः, "जोएणं कम्मएणं०" गाहा, योनिरिति च सामान्यं, तस्य सचित्तशीतसंवृत्तादिभेदाः, अतस्तद्भेदोपदर्शनार्थं तिविधा येत्यादि, तत्र नारकाणां यदुपपातक्षेत्रं तच्छीतस्पर्शपरिणतं अन्यत्र परिणतं, तत्रोत्पन्नत्वाच्छीतयोनिकाः उष्णयोनिकाश्च नारका भवंतीति, भवनवासिनामुपपातक्षेत्रं शीतोष्णस्पर्शपरिणतं तत्रोत्पन्नत्वाच्छीतोष्णयोनिकाः, एकेन्द्रियाणामग्निकायवर्जानां यावत् संमूर्च्छनजपंचेन्द्रियतिरश्चां सम्मूर्च्छनजमनुष्याणां च शीतादित्रिविधस्पर्शपरिणाममुपपातक्षेत्रमिति त्रिविधयोनिका भवंति, एवं गब्भवक्कंतियपंचिंदियतिरिक्खजोणियाणं गब्भवक्कंतियमणुस्साणं, वाणमंतरजोइसियवेमाणियदेवाणं जहा भवणवासीणं, नारकाणां यदुपपातक्षेत्रं तन्न केनचिज्जीवेन परिगृहीतमिति अचित्ता योनिः, सत्यप्येकेन्द्रियसूक्ष्मजीवनिकायसंभवे, एवं भवनवासिनामपि, पृथिवीकायिकादीनां यावत् संमूर्च्छनजमनुष्याणामुपपातक्षेत्रे परिगृहीते चापरिगृहीते चोभयरूपेणोत्पत्तिरिति त्रिविधा योनिः, गब्भवक्कंतियपंचिंदियतिरिक्खजोणिया गब्भवक्कंतियमणुस्सा य यत्र जायंते तत्र अचित्ता अपि पुद्गलाः शुक्रशोणितादयः संतीति मिश्रा योनिः, व्यंतरादयो यथा भवनवासिनः, नारकाणां योनिः संवृता, नरकनिष्कुडा संवृतगवाक्षकल्पास्तत्र जाता वर्द्धमानमूर्त्तयस्तेभ्यः पतंति, शीतेभ्य उष्णेषु उष्णेभ्यश्च शीतेषु, एवमसुरकुमारादीनामपि संवृता योनिः, 'देवसयणिज्जंसि देवदूसंतरिए अंगुलस्स असंखिज्जइभागमेत्ताए सरीरोगाहणाए उववण्णा' इति वचनात्, एवं सर्वदेवानां संवृता योनिरेकेन्द्रियाणां च, द्वीन्द्रियाणां चतुरिन्द्रियपर्यवसितानां विवृता योनिः, पंचिंदियतिरिक्खजोणियाणं मणुस्साण य संवृतविवृता योनिरिति, शेषं प्रकटार्थं यावत् पदसमाप्तिरिति ।

इति श्रीप्रज्ञापनाप्रदेशव्याख्यायां नवमपदव्याख्या समाप्तेति ।

साम्प्रतं दशममारभ्यते, अस्य चायमभिसम्बन्धः–इहानन्तरपदे सत्त्वानां योनयः प्रतिपादिताः, साम्प्रतं यत्तत् उपपातक्षेत्रं रत्नप्रभादि तस्य चरमाचरमविभागप्रदर्शनार्थमिदं प्रक्रम्यते, तत्रेदमादिसूत्रं–'कइ णं भंते! पुढवीओ पण्णत्ताओ' इत्यादि, निगदसिद्धं यावत् 'इमा णं भंते! रयणप्पभा पुढवी किं चरिमा अचरिमे'त्यादि पुच्छा, अथ केयं चरमाचरमपरिभाषेति?, अत्रोच्यते–चरिमं नाम प्रांतपर्यन्तवर्त्ति, आपेक्षिकं चरमत्वं, यदुक्तमन्यद्रव्यापेक्षया इदं चरमं द्रव्यमिति, यथा पूर्वशरीरापेक्षया चरमं शरीरमिति, तथा अचरमं नाम प्रान्तमध्यवर्त्ति, आपेक्षिकं चाचरमत्वं, यदुक्तमन्यद्रव्यापेक्षया इदमचरमद्रव्यं, यथाऽन्यशरीरापेक्षया मध्यशरीरमिति, चरमाइं अचरमाइंति बहुवचनप्रश्नः, चरिमंतपदेशा अचरिमंतपदेसत्ति, चरमान्येवान्तवर्त्तित्वादन्ताश्चरमान्ताः तेषां प्रदेशा इति समासः, तथा अचरममेवान्तः अचरमान्तस्तस्य प्रदेशा इति विग्रहः, अचरिमान्तप्रदेशा इति भावनीयं, गो०! णो चरिमा णो अचरिमा, चरिमाचरिमत्वमेतदापेक्षिकं, अपेक्षाऽभावाच्च कथं चरिमा भविष्यति, अचरमत्वमप्यन्यापेक्षयैव भवति, कथमन्यापेक्षया चरिमत्वं?, यदि रत्नप्रभाया बाह्यतोऽन्या पृथिवी स्यात् तस्यामवस्थायामचरमत्वं युज्यते, न चास्ति, तस्मान्नाचरमा, अयं च वाक्यार्थः–किमियं रत्नप्रभा पश्चिमा उत मध्यमेति, तदेतत् द्वितीयमपि यथा न संभवति तथोक्तं, इदानीं नोचरिमाइंति नोअचरिमाइंति, कहं?, यदा चरमव्यपदेशा चेव नत्थि तदा चरिमाइं कहं भविस्संति, एवं अचरिमाइंपि, तेण णोचरिमाइं णोअचरिमाइं, णोचरिमंतपदेसा णोअचरिमंतपदेसत्ति, अत्रापि चरमत्वस्याचरमत्वस्य चाभावात् प्रदेशकल्पनाया अप्यभाव इत्यत उक्तलक्षणा णोचरिमंतपदेसाणोअचरिमंतपदेसा रत्नप्रभेति, किं तर्हि?, नियमेन अचरिमं चरिमाणि य, एतदुक्तं भवति–अवश्यंतयैव केवलभंगवाच्या न भवति, अवयवावयविरूपत्वादसंख्येयप्रदेशावगाढत्वाद्यथो-

क्तनिर्वचनविषयैवेति, तथाहि—रत्नप्रभा तावदनेन प्रकारेण व्यवस्थिता इति विनेयजनानुग्रहाय लिख्यते, एवमवस्थितायां यानि प्रान्तेषु व्यवस्थितानि तदध्यासितक्षेत्रखण्डानि तानि तथाविधविशिष्टैकपरिणामयुक्तत्वाच्चरमाणि, यत् पुनर्मध्ये महद् रत्नप्रभाक्रान्तं क्षेत्रखण्डं तदपि तथाविधपरिणामयुक्तत्वादचरिमं, उभयसमुदायरूपा चेयं, अन्यथा तदभावप्रसंगात्, तथा प्रदेशपरिकल्पनायां तु चरिमंतपदेसा य अचरिमंतपदेसा य, कहं ?, जे बाहिरखंडपदेसा ते चरिमंतपदेसा जे मज्झखंडपदेसा ते अचरिमंतपदेसा इति, अत्र अन्ये तु व्याचक्षते—तथाविधप्रविष्टेतरप्रान्ताक्रान्ते प्रदेशेऽर्द्धश्रेणिपटलरूपाणि चरिमाणि, मध्यस्त्वचरिम इति, न चेत्थमपि कश्चिद्दोष इति, चरिमंतपदेसा य अचरिमंतपदेसा यत्ति, पूर्ववदेकान्तदुर्नयनिरासप्रधानेन निर्वचनसूत्रेण अवयवावयविरूपं वस्त्वित्याह, तयोश्च भेदाभेद इति, एवं जाव अहेसत्तमाए, ईसीपब्भाराए, अलोए णं किं चरिमे अचरिमे पुच्छा, गोयमा ! अचरिमे चरिमाणि य, चरिमाणि ताव जाणि लोकदंतएसु पविट्ठाणि, शेषमन्यदचरिमं, चरिमंतपदेसा य अचरिमपएसा य तथैव, इमीसे णं भंते ! रयणप्पभाए पुढवीए अहे० चरिमस्स चरिमाण य चरिमंतपदेसाण य अचरिमंतपएसाण य पुच्छा, गोयमा ! सव्वत्थोवा दव्वट्ठयाए एगे चरिमे, कथं ?, स्कन्धपरिणामं प्रतीत्य, यत्तदचरमं तत् स्कन्धपरिणामेन परिणतत्वादेकमेव द्रव्यं, तस्यैव स्कन्धस्य चरिमा दव्वा ते असंखिज्जगुणा, यस्मादसौ महास्कन्धः तस्मादसंख्येयगुणो, इदाणीं चरिमाणं दव्वाणं अचरिमं चरिमाणि य समुदितानि किं तुल्लाइं ?, चरिमा साहिया इति, अत आह—अचरिमं चरिमाणि य दो विसेसाहियाइं, कहं ?, जं तं अचरिमं दव्वं तं चरिमदव्वेसु पक्खित्तं ताहे तं विसेसाहियमेव भवति चरिमदव्वाणं, पदेसट्ठयाए पुण सव्वत्थोवा चरिमंतपदेसा, अचरमपएसा असंखिज्जगुणा एव, चरमंतपदेसा स्तोकाः, पृथिवीन्यायेऽप्येवमेव दृश्यन्ते, चरिमंतपदेसा य अचरिमंतपदेसा य दो विसेसाहिया अचरिमंतपदेसेहिंतो, कहं ?, चरिमं

तपदेसा अचरिमंतपदेसरासिंमि पक्खिया समहिया चेव अचरिमंतपदेसरासीतो, न दुगुणाइगुणा चेति,तेण चरिमंतपदेसा अचरमंतपएसा य समुदिया दोवि विसेसाहिया दव्वट्ठयाए पदेसट्ठयाए सव्वत्थोवा,एगे अचरिमे चरिमाइं असंखेज्जगुणाइं,अचरिमं चरिमाणि य दोवि विसेसाहियाइं,चरिमंतपदेसा असंखिज्जगुणा,कहं ?,अचरिगसमुदायस्स चरिमंतपदेसा असंखिज्जगुणा दव्वसमुदायं पडुच्च,जो अचरिमचरिमदव्वसमुदायो दव्वाणं तस्स दव्वस्स समुदायस्स जे चरिमदव्वाणं पदेसा ते असंखिज्जगुणा, जम्हा एगमेव दव्वं असंखेज्जपदेसोगाढं,चरिमंतपदेसेहिंतो अचरिमंतपदेसा य असंखिज्जगुणा, जम्हा अचरिमं दव्वं चरिमे दव्वसमुदायस्स असंखिज्ज-गुणमेव तेण पदेसेहिंतोवि असंखिज्जगुणं भविस्सति,चरिमंतपदेसा जे लोगदंतेसु पविट्ठा, अचरिमंतपदेसा य ते णवरं अणंतगुणा, कथं ?, अनन्तत्वादलोकस्य,लोगस्स णं भंते ! अचरिमस्स य चरिमाण य पुच्छा, गोयमा ! सव्वत्थोवा लोगागासस्स दव्वट्ठयाए एगमेगे अचरिमे य, लोकस्यापि द्रव्योपचारेण एकमचरमद्रव्यं, अलोकस्याप्येकमचरमद्रव्यं एकद्रव्यत्वात् सर्वस्तोकं, लोगस्स चरिमाइं असंखिज्जाइं, अलोगस्स पुण ततोहिंतो विसेसाहियाइं, जम्हा अलोगंतपदेसेसु गणिज्जमाणा पृथिवीन्यासेन समतिरिक्ता दृश्यन्ते, तेण अलोगस्स चरिमाइं विसेसाहियाइं, लोगस्स अलोगस्स य चरिमाणि समुदिताणि विसेसाहियाइं, जम्हा लोगचरिमरासी वीसा ठाविओ अलोगचरिमाचरमरासी बत्तीसा, एयस्स लोगालोगागासस्स चरिमअचरिमरासी य संखिज्जन्तो विसेसाहियओ भवति, एवं बत्तीसाए बावण्णा विसेसाहिया, पदेसट्ठयाए पुण सव्वत्थोवा लोगस्स चरिमंतपदेसा, अलोगस्स चरिमंतपदेसा विसेसाहिया, जम्हा लोगचरिमंतपदेसेसु अलोगचरिमंतपदेसा पृथिवीन्यासेन गण्यमानाः समतिरिक्ता एव दृश्यन्ते, लोगस्स अचरिमंतपदेसा असंखेज्जगुणा अलोगचरिमपदेसेहिंतो, कथं ?, यस्मात् क्षेत्रमेव तद् बहु, क्षेत्रबहुत्वाच्च

प्रदेशबहुत्वमपि, तेण अचरिमंतपदेसा लोयस्स असंखिज्जगुणा, अलोगस्स पुण अचरिमंतपदेसा अणंतगुणा, लोगस्स अचरिमंतपदेसेहिंतो कथमनन्तगुणता ?, क्षेत्रस्यानन्तगुणत्वादेव, लोगस्स अलोगस्स य चरिमंतपदेसा य अचरिमंतपदेसा य दोवि विसेसाहिया, तथैव पूर्वन्यायेन त्रिंशतिर्द्वात्रिंशद्वा संक्षेपतः द्रष्टव्यं, दव्वट्ठपदेसट्ठयाए सव्वत्थोवा लोगालोगस्स दव्वट्ठयाए एगमेगे अचरिमे, यस्मात्तदेकमेव द्रव्यं स्कन्धपरिणतं, लोगस्स चरिमाइं विसेसाहियाइं, जम्हा अलोगचरिमंता लोगचरिमंतएसु पविट्ठा गणिज्जमाणा समतिरित्ता एव दृश्यन्ते पृथिवीन्यासे, लोगस्स य अलोगस्स य अचरिमाइं चरिमाणि य दोवि विसेसाहियाइं, कथं ?, अलोगचरिमाचरिमरासी बत्तीसा बुद्धीए ठाविऊण लोगचरिमरासी वीसं, एत्तो लोगचरमरासिंमि अलोगचरिमरासिं अचरिमाणि य दुवेण्हंपि एगत्थ संखिवेज्जा, जाता बावण्णा, तेण समुदिता विसेसाहिया, विसेसाहिया ण संखेज्जगुणा, जेण दुगुणावि न भवंति, लोगस्स चरिमंतपदेसा असंखिज्जगुणा, यस्माद्द्रव्यं प्रदेशगणनया गण्यमानमसंख्येयमेव, अलोगचरिमंतपदेसा विसेसाहिया, जम्हा चरिमंताणि चेव समतिरित्ताणि तेण पदेसा विसेसाहिया, लोगस्स अचरिमंतपदेसा असंखिज्जगुणा अलोकचरिमान्तप्रदेशेभ्यः, यस्मात् क्षेत्रं एकमेव तद् बहु, अलोगस्स अचरिमंतपदेसा अणंतगुणा, कथं ?, यस्मादनन्तगुणमेव तत् क्षेत्रं, लोकस्य अलोकस्य च चरिमंतपदेसा य अचरिमंतपदेसा य विसेसाहिया, पूर्वाभिहितेनोपायेन वक्तव्यं, सव्वदव्वाणि विसेसाहियाणि । परमाणुपोग्गले णं भंते ! किं चरिमे अचरिमे अव्वत्तए पुच्छाए छव्वीसं भंगा, ते य इमेण विहिणा ठाविज्जंति—चरिमे अचरिमे अव्वत्तव्वए चरिमाइं अचरिमाइं अव्वत्तव्वयाइं, एते पत्तेयभंगा, ततो चरिमे अचरिमे चउभंगी, ततो चरिमे य अवत्तव्वए य चउभंगी, ततो अचरिमे य अवत्तव्वए य चउभंगी, ततो चरिमे य अचरिमे य अवत्तव्वए य अट्ठ भंगा, एवं

एते छव्वीसं भंगा, गोयमा ! परमाणुपोग्गला ण चरिमे ण इत्यादि, न चरम इत्येकत्वादसहायत्वादेकप्रदेशावगाहत्वात्, तथा नाचरमः अमध्यत्वान्निरवयवत्वात्, किंतु अवत्तव्वए, अवक्तव्यको नाम चरमाचरमव्यपदेशकारणशून्यः,स उभयथापि वक्तुमशक्यत्वादवक्तव्यक इति,अस्य स्थापना,णो चरिमाइं इत्यादि सूत्रसिद्धं याव दुपएसिएणं भंते ! इत्यादि,अत्र निर्वचनं गो०! सिय चरिमे णो अचरिमे सिय अवत्तव्वए,अयमत्र भावार्थः–यदा दुपदेसिओ दोसु पदेसेसु समसेढीए एवमोगाहति तदा चरिमे,णो अचरिमेत्ति, सर्वद्रव्याणामेव केवलाचरमत्वस्यायोगात् ,जया पुण स एगंमि पदेसे एवमोगाहति तदा अवत्तव्वए,शेषं सूत्रसिद्धं,यावत् तिपदेसिएणं भंते! इत्यादि,अत्र निर्वचनं गोयमा! सिय चरिमएणो अचरिमे सिय अवत्तव्वए,अयमत्र भावार्थः-यदा दुपएसिए दोसु पदेसेसु समसेढीए एवमवगाहति तदा चरिमे णो अचरिमे इत्यादि, अत्र लाघवार्थमुक्तानुक्तविधिमानभंगोपदर्शनाय संग्रहगाथामाह–'परमाणुम्मि य ततितो पढमो ततिओ य होइ दुपदेसे' तृतीयोऽवक्तव्यकः,स दर्शित एव,पढमे चरमो सद्दहितो,ततिओ य अवत्तव्वयाभिहाणो होति दुपएसे खंधे, एएवि दरिसिता चेव, 'पढमो ततिओ णवमो एक्कारसमो य तिपदेसे' इयमत्र भावना–जदा दो एगो य, एएसु पएसेसु समसेढीए एवमवगाहति तदा चरिमववदेसं लभति, एस पढमो भंगो, जदा पुण स एगंमि पदेसंमि अवगाहति तदा अवत्तव्वगववएसं पावतित्ति एस ततिओ, यदा पुण स एव तिपएसिओ तिसु पएसेसु समसेढीए अवगाहति तदा चरिमाइं च अचरिमे यत्ति अभिहाणमासादेति, कहं ?, एत्थ जे अंतिमेल्ला दो परमाणू ते परोप्परमसंसत्तत्तणतो चरिमाइं, जो मज्झे स मध्यवर्तित्वादेवाचरम इत्येवं नवमः,यदा पुण स एव तिपदेसिओ तिसु पदेसेसु समसेढिविसेढीए एवमवगाहति तदा चरिमे य अवत्तव्वा यत्ति संलप्पति, कहं ?, जे दो परमाणू समसेढी सा अवत्तव्वगत्तिकट्टु एक्कारसमो, एतं असंमोहत्थं भणियं, लक्खणावि अणु-

पुव्वीठवणाए दंसिज्जति—परमाणुम्मि दुपएसिए तिपदेसिएत्ति भावार्थः, चतुष्पदेशिकभंगान् प्रतिपादयन्नाह—पढमो ततिओ नवमो दसमो एक्कारसो य बारसमो। भंगा चउप्पदेसे तेवीसइमोऽवि दट्ठव्वो ॥१॥ अयमत्र भावार्थः—जया चउप्पदेसितो दोसु पदेसेसु समसेढीए एवमवगाहति तदा चरिमंति भण्णति, एस पढमो, यदा पुण स एगंमि पदेसे एवमवगाहति तदा अवत्तव्वयत्ति वुच्चति, स ततिओ, जया पुण स एव तिसु पएसेसु समसेढीए एवमवगाहति तदा चरिमाइं च अचरिमे यत्ति शब्द्यते, एस नवमो, चरिमो भावितार्थ एव, जदा पुण स एव चउसु पदेसेसु समसेढीए एवमवगाहति तदा चरिमाइं च अचरिमाइं कीर्त्यंते, कहं ?, जे अंतिमिल्ला दो परमाणू ते चरिमाइंति, जे मज्झे दो ते अचरिमाइंति, एस दसमो, जया पुण एसोवि तिसु पदेसेसु समसेढीविसमसेढीए एवमवगाहति तदा चरिमे य अवत्तव्वए यत्ति व्याख्यायते, एस एक्कारसमो, भावितार्थः, एवं जदा पुण स एव जं चउसु पदेसेसु दो समसेढीए दो विसमसेढीए एवमवगाहति तदा चरमाइं अवत्तव्वाइंति अभिलप्पते, कहं ?, जं समसेढिया दो ते चरिमाइं जे विसेढिया ते अवत्तव्वयाइं, एस बारसमो, जदा पुण स एव चतुप्पदेसियो चउसु पदेसेसु समसेढीविसेढीए एवमवगाहति, तदा चरिमाइं च अचरिमे य अवत्तव्वए य, एस तेवीसइमो, प्रकटार्थश्चेति, संपतमेते असमोहत्थं भणियलक्खणावि अणुपुव्वीठवणाए दंसिज्जए प्रथमादयश्चतुष्प्रदेशिकेति गाथार्थः, पंचप्रदेशिकभंगान् प्रतिपादयन्नाह 'पढमो ततिओ सत्तम नव दस एक्कारसो य बारसमो। तेवीस चउव्वीसो पणवीसइमो य पंचमए ॥१॥ इदमत्र हृदयं—जदा पंचपदेसिओ दोसु समसेढीए एवमवगाहति तदा चरमंति भण्णंति, एस पढमो, जदा पुण स एगमेगम्मि पदेसे एवमवगाहति तदा अवत्तव्वगंति वुच्चति एस ततिओ, जदा पुण स एव पंचसु पदेसेसु एवमवगाहति तदा दो चरिमे अचरिमे यत्ति शब्द्यते, कथं ?, इह ये चरिमा चत्तारि परमाणू तेसिमेग-

संबंधपरिगणणओ एगरूवत्तं एगवण्णत्तं एगरसत्तं एगफासत्तं पडुच्च एकव्यपदेशः, एकव्यपदेशत्वे च सति चरिमेत्ति भण्णति, जो पुण मज्झे सो अचरिमोत्ति एस सत्तमोत्ति, जया पुण स एव, तिसु पदेसेसु समसेढीए एवमवगाहति तदा चरिमाइं च अवत्तव्वए यत्ति कीर्त्यते, एष नवमो, भावितार्थमेव, जया पुण स एव चउसु पदेसेसु समसेढीए एवमवगाहति तदा चरिमे य अवत्तव्वयाइं च, एसो बारसमो विज्ञातार्थ एव, जया पुण स एव पंचसु पदेसेसु समसेढीविसमसेढीए एवमवगाहति तदा चरिमाइं च अवत्तव्वए य, जया दो समसेढीए तहिंपि दो चरिमाइं जो एगो विसेढीए सो अवत्तव्वगंति, एस तेरसमो, जया पुण स एव चउसु पदेसेसु समसेढीविसमसेढीए एवमवगाहति तदा चरिमाइं च अचरिमे य अवत्तव्वए य, एत्थ जे अंतिमिल्ला ते चरिमाइं, जो मज्झपदेसो सो अचरिमं, जो विसेढीओ सो अवत्तव्वगंति, एस तेवीसइमो, जदा पुण स एव पंचपदेसिओ पंचसु पदेसेसु समसेढिविसेढिए एवमवगाहति तदा चरिमाइं च अचरिमाइं च अवत्तव्वए य, एस पणुवीसइमो, भावितार्थ एव, साम्प्रतमस्य स्पष्टसंवेदनाऽसन्मोहार्थोक्तलक्षणाऽपि विधिवदनुक्रमस्थापनया दृश्यन्ते प्रथमादयः पंचप्रदेशिक इति गाथार्थः । विधिप्रतिषेधरूपत्वाच्छास्त्रस्य विधिना अणुद्व्यणुकादीनां भङ्गकानभिधाय साम्प्रतं प्रतिषेधभंगकनिषेध्यद्वारेण षट्प्रदेशिकविधीयमानभंगोपदर्शनायेदमाह—"बिचउत्थ पंच छट्ठं पण्णर सोलं च सत्तरट्ठारं । वीसेक्कवीसबावीसकं च वज्जेज छट्ठंमि ॥१॥" एतदुक्तं भवति—अत्र द्वितीयादयो यथोक्ता भंगा वज्जंते, किं कारणं?, उच्यते—इह बितियभंगो अचरिमो, अचरिमं च केवलं चरमरहियं दव्वमेव णत्थि, प्रान्ताभावे चरमाभावादिति भावना, तथा चउत्थो चरिमाइं, पंचमो अचरिमाइंति छट्ठो अवत्तयाइं च, पण्णरसमो अचरिमे य अवत्तव्वयाइं च सोलसमो अचरिमे य अवत्तव्वयाइं च सत्तरसमो अचरिमाइं च अवत्तव्वए य अट्ठारसमो अचरिमाइं च अवत्त-

व्वयाइं च, एयप्पगारं लोए दव्वमेव णत्थि, केवलचरमादीनामभावादित्यत एवोपन्यस्तभंगकदम्बकं स्वरूपतो भावनीयमेतदिति, वीसइमो पुण चरिमे य अचरिमे य अवत्तव्वगाइं चत्ति एयारूवो सत्तपदेसियस्सेवत्तिकट्टु, एवं एगवीसइमोवि चरिमे य अचरिमाइं च अवत्तव्वए यत्ति एसोवि एरिसो सप्तप्रदेशिकस्यैवेतिकृत्वा, बावीसइमो पुण चरिमे य अचरिमाइं अवत्तव्वगाइं चत्ति एरिसो अट्ठपदेसियस्सेव भवतित्तिकृत्वा परिह्रियते, एत्थ चोदगो भणति–णणु छट्ठं भंगो अवत्तव्वगाइं इमेण रूवेण होइ, एत्थ किं पडिसिद्धाइं, दुपएसियादिसु य किं णो विहियाइंति ?, उच्यते, ण, एयारूवं दव्वं नत्थि, कथं ज्ञायते इति चेदाचार्यो प्रवृत्तिर्यदि स्यात् प्रतिपादयेत् न च प्रतिपादितं, भावे वा जातिपरनिर्देशादिना तृतीयभंग एवान्तर्भाव इति, शेषास्तु प्रथमभंगादयो यथार्थं गम्यंते, भवंतीति, तेऽपि विनेयानुग्रहार्थमुपदर्श्यंत एव–यदा स्याप्य एएसिं दोसु पदेसेसु समसेढीए एवमवगाहति तदा स चरिमो, स एव जदा एगंमि पदेसे एवमवगाहति तदा अवत्तव्वए, स एव जया पंचसु पदेसेसु एगपरिक्खेवेण तदा अचरिमे चरिमे, यदा पुण स एव छसु पएसेसु एगपरिक्खेवेणं एगाहिएणं एवमवगाहति तदा चरिमे य अचरिमाइं च, एत्थ एगे आयरिया एवं भणंति–जे अंतिमिल्ला चत्तारि परमाणू ते चरिमं जे मज्झिल्ला दो ते अचरिमाइं, अण्णे भणंति–चउण्हं खेत्तपदेसं भवा उवहियत्तणओ ऊ ण एगपरिणामो जुत्तो तम्हा ण भवति चेव एस भंगो, पडिसिद्धो य सुत्ते, जओ भणियं–छट्ठं च, एयस्स अत्थो पायसेलीए इमो–छट्ठं अट्ठमं च, जहावि एतारूवो छप्पएसिओ होति तहावि एवं गमिज्जति–जे एगावोढंतगा चत्तारि परमाणू ते तथैकपरिणामपरिणतत्वात् चरमंतः तदधिकोऽपि विसमश्रेण्यैव प्रतिबद्धत्वादतिरिक्त इत्येकमेव चरमं, पुनश्च अधिगविढितो मध्यवर्त्तित्वादनेकपरिणामत्वाद्वस्तुनि अचरमोवि घेप्पति, ततो अचरिमाइवि हवंति, तदा न कश्चिद्विरोधः, अन्यथा

याऽऽगमाविरोधेन भावनीयं, यथा न दोषः, विचित्रपरिणामसंभवाद्, अलं प्रसंगेन, तत्त्वमत्र केवलिनो विदंति, विशिष्टश्रुतविदश्च, जदा पुण स एव तिसु पदेसेसु समसेढीए एवमवगाहति तदा चरिमाइं च अचरिमे य, जया पुण स एव चउसु पदेसेसु समविसमसेढीए एवमवगाहति तदा चरिमाइं अचरिमाइं च, यदा पुण स एव तिसु पदेसेसु समसेढोविसेढीए एवमवगाहति तदा चरिमे य अवत्तव्वए य, यदा पुण स एव चउसु पदेसेसु समसेढीविसेढी एवमवगाहति तदा चरिमे य अवत्तव्वयाइं, जया पुण स एव पंचसु पदेसेसु समसेढीविसेढीए एवमवगाहति तदा चरिमाइं च अवत्तव्वए य, यदा पुण स एव छसु पदेसेसु समसेढिविसमसेढीए एवमवगाहति तदा चरिमाइं च अवत्तव्वयाइं च, जदा पुण स एव छसु पदेसेसु एगपरिक्खेवेणं एगाहिगेणं एवमवगाहति तदा चरिमे य अचरिमे य अवत्तव्वए य, जदा पुण स एव चउसु पदेसेसु समविसमसेढीए एवमवगाहति तदा चरिमाइं च अचरिमे य अवत्तव्वए य, जया पुण स एव पंचसु पदेसेसु समसेढीविसमसेढी एवमवगाहति तदा चरिमाइं च अचरिमे य अवत्तव्वयाइं च, जदा पुण स एव पंचसु पदेसेसु समसेढीए विसमसेढीए एवमवगाहति तदा चरिमाइं च अचरिमाइं च अवत्तव्वए य, जया पुण छप्पएसिओ छसु चेव पएसेसु समसेढिविसमसेढीए एवमवगाहति तदा चरिमाइं च अचरिमाइं च अवत्तव्वयाइं, एवं ताव छप्पएसियस्स संभवभंगा णिदंसियत्ति गाथार्थः। इदाणीं सत्तपदेसियमहिगिच्च भण्णति–बिचउत्थ पंच छट्ठं पणर सोलं च सत्तरट्ठारं। वज्जिय बावीसइमं सेसा भंगा उ सत्तमए ॥१॥ इदं गाथासूत्रं वस्तुतो भावितार्थमेव, नवरं बावीसइमो भंगो अट्ठपदेसियस्स हवति तेण वज्जिज्जति, दंसिओ य सो, सेसा पुण सव्वखंधेसु चेव वज्जिजंति, दर्शितमिदं विनेयजनानुग्राहार्थं ठवणामेत्तेण चेव सेसा पुण जे भवंति ते णिदंसिज्जंति; एतेसिं भावणा–जम्हा सत्तपदेसियस्स एगंमि पदेसे दोसु तिसु चउसुवि जाव सत्तसुवि

अवगाहो भवति तेण एते भंगा भवंतित्ति जाणियव्वा; इदानीं अट्ठपदेसियमधिकृत्येदमाह–बिचउत्थपंचछट्ठं पण्णर सोलं च सत्तरऽट्ठारं। एते वज्जिय भंगा सेसा सेसेसु खंधेसु ॥१॥ अयमभिप्रायो भवितार्थ एव, णवरं सेसा जे सत्तपदेसिए रतिता बावीसतिमो य एयारूवो, एते सेसेसु अट्ठपदेसगादिसु भवंति, जम्हा अट्ठपदेसगाणवि एगादिपदेसेसु अवगाहो हवति चेव, अण्णे पढंति–'एते वज्जिय भंगा, तेण परमवट्ठिया सेसा,' कथं ?, यस्मादसंख्येयप्रदेशिकस्याप्यनंतप्रदेशिकस्यापि च स्कंधस्य एकस्मिन्नपि प्रदेशेऽवगाहः, द्व्योर्यावदसंख्येयेष्वपि पृथक् पृथग्, अनंतेष्ववगाहो न भवति, यस्माल्लोक एव असंख्येयप्रदेशिकः, आह–कथमनन्तानां स्कंधानामनंतप्रदेशिकानामसंख्येयेष्ववगाह इति ?, उच्यते, शुषिरस्वभावत्वादाकाशस्य, यथैकस्य प्रदीपस्य गृहमध्ये प्रज्वालितस्य प्रभास्सर्वमेव गृहं व्याप्नुवंति तथा प्रदीपसहस्रस्यापि व्याप्नुवंति, यस्मात् पुरुषस्य मध्यावस्थितस्य पृथक् २ छाया दृश्यंते, तथा गंधपुद्गलाः शीतपुद्गलाः धूमाश्चान्योन्याविरोधाद्व्याप्नुवंति एवमिहापीति, तथा चोक्तं–"आविशतां द्रव्याणां भात्यवकाशो यदन्यपूर्णोऽपि। आकाशमिति निरुक्तं तेन नभस्तत्र निरवयव ॥१॥" मिति, तस्मादसंख्येयेष्वेवानंतानामवगाह इति ॥ कति णं भंते! संठाणा पण्णत्ता?, गो०! पंच, परिमंडले वट्टे तंसे चउरंसे आयते, तत्थ परिमंडले णं भंते! संठाणे किं संखिज्जपदेसिए असंखेज्जपदेसिए अणंतपदेसिए ?, गो०! सिय संखेज्जपदेसिए सिय असंखिज्जपदेसिए सिय अणंतपदेसिए, एवं जाव आयए, परिमंडले णं भंते! संठाणे संखेज्जपदेसिए किं संखेज्जपएसोगाढे असंखेज्जपदेसोगाढे अणंतपएसोगाढे पुच्छा, गो०! संखिज्जपदेसोगाढे णो असंखिज्जपदेसोगाढे णो अणंतपएसोगाढे, जम्हा ते संखिज्जा एव पदेसा कहमसंखिज्जसु वा अणंतेसु वा पदेसेसु अवगाहिस्संति ?, असंखिज्जपदेसिए अणंतपएसिए य संखिज्जेसु वा असंखिज्जेसु वा, एवं जाव आयए, परिमं-

डले णं भंते ! संपुण्णपरिमंडले० संखेज्जेसु वा अवगाहेज्जा असंखिज्जेसु वा, अणंतपदेसिए० संखेज्जेसु वा असंखेज्जेसु वा, णो अणंतेसु, जम्हा लोगो चेव असंखेज्जपदेसिओ, पोग्गलाणं च अण्णत्थ गती णत्थि, एवं जाव आयए, परिमंडले णं भंते ! संठाणे संखेज्जपदेसिए संखेज्जपदेसोगाढे किं चरिमे पुच्छा, जहा रयणप्पभाए वागरणं तहा भणियव्वं, एवमेतेणं गमएणं असंखेज्जपदेसिए संखिज्जपदेसोगाढे किं चरिमे०? सव्वमणुगंतव्वं, परिमंडलस्स णं भंते ! संठाणस्स असंखिज्जपदेसियस्स असंखिज्जपदेसोगाढस्स अचरिमस्स य चरिमाण य पुच्छा, एतदप्यभिहितमेव जहा रयणप्पभाए सव्वमणुगंतव्वं सुत्ताणुसारेणं, णवरं संकमेणं अणंतगुणत्ति खेत्तचिंताए दव्वचिंतासंकमेणाणंतीत्यर्थः । तहा नेरइयाणं भंते ! गतिचरिमेणंति, गतिचरिमेणंति गतिचरिमतया, पुण णरगेसु अणुववज्जणत्ताएत्ति वुत्तं भवति, णेरइयाणं भंते ! पुच्छाए बहुवयणतो विसेसोत्ति, गतिठिती गाहा, गतिचरिमे ठितिचरिमे भवचरिमे भवो सो चरिमें य इत्यादि भावनीयमिति । प्रज्ञापनाप्रदेशव्याख्यायां दशमपदव्याख्या ।१०॥

साम्प्रतमेकादशमारभ्यते, अस्य चायमभिसंबंधः—इहानंतरपदे सत्त्वानां यदुपपातक्षेत्रं रत्नप्रभादि तस्य चरमविभागः प्रतिपादितः, इह तु भाषापर्याप्तिपर्याप्तानां सत्यादिभाषाविभागोपदर्शनार्थमिदं प्रस्तूयते, इह चेदमादिसूत्रं–से णूणं भंते ! मण्णामीति ओहारिणी भासा ?, सेशब्दस्तत्रशब्दार्थः, स च वाक्योपन्यासे, नूनमुपमानावधारणतर्कप्रश्नहेतुषु, इहावधारणे, भदंत इत्यामंत्रणे, मन्ये अवबुध्य इति, एवं अवधार्यते–अवगम्यतेऽनयेत्यवधारणी, अवबोधबीजभूतेत्यर्थः, भाष्यत इति भाषा, भाषायोग्यतया परिणामितनिसृष्टनिसृज्यमानद्रव्यसंहतिरिति हृदयं, एष पदार्थः, अयं पुनर्वाक्यार्थो वर्त्तते-तत्र भदंत ! एवमहं मन्ये–अवश्यमवधारणी भाषेति, न च सकृत् तदनालोच्यैव, किंतु चिंतेमीति, ओहारिणीं भाषां चिंत

यामीति पर्यालोचयामि युक्तिद्वारेणापि इति—एवं यदुत अवधारणी भाषेति पूर्ववत्, एवं निवेद्य स्वमभिप्रायमधिकृतार्थनिश्चयायैव भगवंतं पृच्छति—अह मन्नामीति ओधारिणी भाषा, अथ प्रक्रियाप्रश्नानन्तर्यमंगलोपन्यासप्रतिवचनसमुच्चयेषु, इह प्रश्ने, ततश्च काक्काऽयमर्थोऽवसेयः—अथ मन्ये एवं यथा अवधारणी भाषा, द्वितीयाभिप्रायनिवेदनमधिकृत्य प्रश्नमेवाह—अह चिंतेमीति ओहारिणी भासा, अथ चिंतयाम्येवं यथाऽवधारणी भाषा, साध्विदमनवद्यमित्यभिप्राय इति, अक्षरार्थ उक्त एव, अधुना मतालोचितार्थविषयमंशतः साम्यमंशतश्चासाम्यमपि संभावयन् समस्तमतालोचतार्थाविपरीततथाभावावधारणायेदमाह—तह मण्णामीति ओहारिणी भासा, तथा समुच्चयनिर्देशावधारणसादृश्यप्रैष्येषु, इह च निर्देशे, ततश्च काक्काऽयमर्थोऽवसेयः—तथा मन्ये यथा पूर्वं मतवान्, न कश्चिद्विशेष इत्यभिप्रायः, कथमिति ?, एवं—यदुतावधारणी भाषा, तह तह चिंतेमीति ओहारिणी भासा, तथा चिंतयामि यथा पूर्वं चिंतितवान, न किंचित्तत्र वितथं, कथमिति ?, एवं यदुतावधारणी भाषेति, अक्षरार्थो निदर्शित एव, एवं गौतमेनाभिप्रायनिवेदने प्रश्ने च कृते सति भगवानाह—हंता गोयमा ! मण्णामीति ओहारिणी भासा, अस्य प्राकृतशैल्या छांदसत्वाच्चायमर्थोऽवसेयः-हंत संप्रेषणप्रत्यवधारणविवा (षा) देषु, इह प्रत्यवधारणे, हंता गौतम ! नासत्यत्वं इत्येवं यदुतावधारणी भाषेति,वेद्यमिदमित्यभिप्रायः, तथा अविकलं मन्यस्व यथा पूर्वं मतवानित्येवं यदुतावधारिणी भाषा, तथाऽविकलं चिंतयस्व यथा पूर्वं चिंतितवान् इत्येवं यदुतावधारिणी भाषेत्येवं तावत् पूज्यपादा व्याचक्षते, अन्ये पुनरन्यथा, तदभिप्रायं पुनरतिगंभीरत्वान्न वयमवगच्छामः, ओहारिणी णं भंते ! भासा किं सच्चेत्यादि, अवधार्यतेऽनयेत्यवधारणी, णमिति वाक्यालंकारे, भदंत इत्यामंत्रणे, भाष्यत इति भाषा, किमिति परप्रश्ने, सतां हिता सत्या, संतो मुनयो

गुणाः पदार्थो वेति, एतद्विपरीता मृषा, सत्यामृषोभयरूपा, परिस्थूलव्यवहारनयमतानुसारिणी चेयमवसेयेति, असत्यामृषा त्रितयविनिर्मुक्ता, व्यवहारनयमतानुसारिण्येवेत्यर्थः, गोयमा ! सिय सच्चेत्यादि निर्वचनं स्यात्सत्या, स्याच्छब्दोऽनेकांतद्योतकः, शेषं सूत्रसिद्धं यावत् आराधनी सच्चेत्यादि, तत्राराध्यतेऽनयेत्याराधनी—यथावस्थितवस्त्वभिधायिनी सत्या, यथा अस्त्यात्मा सदसन्नित्यानित्याद्यनेकधर्म्मकलापालिंगित इति, विराधनी विपरीतवस्त्वभिधायिनी मृषा, यथा नास्त्यात्मा सन्नेव वेत्यादि, आराधनीविराधनी सत्यामृषा, यथा अधिकृत्य किंचिन्नगरं पत्तनं वा अस्मिन् दश दारका जाता इति पंचसु जातेष्वेवमभिदधतः, या नैवाराधनीत्यादित्रयविकला सा असत्यामृषा, यथा हे देवदत्त इत्यादि, शेषं सूत्रसिद्धं यावत् अह भंते ! गाउमित्यादि, इहाराधनी यथावस्थितवस्त्वभिधायिनी सत्येत्युक्तमत इहोक्तलक्षणयोगसंशयापन्नस्तदपनोदाय पृच्छति—अथ भदंत ! गावः प्रतीताः मृगा अपि पशवः-अजाः पक्षिणः प्रतीताः, प्रज्ञापनी तदर्थकथनी, णमिति पूर्ववत्, एषा सत्या भाषा नैषा भाषा मृषेति, कोऽभिप्रायः ?—गाव इति गोजातिं प्रतिपादयति, तत्र च त्रिलिंगोऽप्यभिधेयोऽर्थोऽस्ति स्त्रीपुंनपुंसकवेदभावात्, एवं मृगपशुपक्षिष्वपि भावनीयं, न च ते शब्दास्त्रिलिंगाभिधायकाः, तथाऽश्रवणात्, अपि तु पुल्लिंगगर्भा एव, भगवानाह—हंता गोयमेत्यादि, हंतेति प्रत्यवधारणे, गौतमेत्यामंत्रणे, गाव इत्यादि प्रज्ञापनी तदर्थकथनी आराधनी यावदेषा भाषा, न एषा भाषा मृषेति, कोऽभिप्रायः ?, गाव इति गोजातिं प्रतिपादयति, तत्र च त्रिलिंगोऽप्यभिधेयोऽर्थोऽस्ति स्त्रीपुंनपुंसकवेदभावात्, एवं मृगपशुपक्षिष्वपि भावनीयं, न च ते शब्दास्त्रिलिंगाभिधायकाः, तथाऽश्रवणात्, अपि तु पुंल्लिंगगर्भा एव, भगवानाह—हंता गोयमा! न मृषा जात्यभिधायित्वाज्जातेश्च त्रिलिंगार्थाव्यतिरेकात्तदभिधाने च वस्तुतो लिंगार्थानभिधानाच्छब्दशक्तिस्वाभाव्यात्

तया प्रतीतिदर्शनाद् व्यवहारहेतुत्वाददुष्टविवक्षया समुत्पत्तेः अपरपीडाकरत्वाच्चेति हृदयं । अह भंते जा य इत्थिवयू इत्यादि, अथेति प्रश्ने, भदंत इत्यामंत्रणे, या च स्त्रीवाक् स्त्रीवचनमित्यर्थः, एवं पुरुषनपुंसकयोरपि वाच्यं, शेषं गतार्थं यावत् प्रश्नसूत्रांतः, कोऽभिप्रायः ?, इह यदा खट्वाघटाऽऽतोद्यादौ स्त्रीपुंनपुंसकवचनानि प्रयुज्यंते न च बाह्योऽर्थः तदाकारेण परिणतोऽस्ति खट्वादिः, कथं ?, यस्माच्छब्दविद्भिरिदं रूपादिलक्षणमुक्तं-"योनिर्मृदुत्वमस्थैर्यं, मुग्धता क्लीबता स्तनौ । पुंस्कामितेति लिंगानि, सप्त स्त्रीत्वे प्रचक्षते ॥१॥ मेहनं खरता दार्ढ्यं, शौंडीर्यं श्मश्रु तृप्तता। स्त्रीकामितेति लिंगानि, सप्त पुंस्त्वे प्रचक्षते ॥२॥ स्तनादिश्मश्रुकेशादिभावाभावसमन्वितम् । नपुंसकं बुधाः प्राहुर्मोहानलसुदीपितम् ॥३॥" तथाऽन्यत्राप्युक्तं-स्तनकेशवती स्त्री स्याद्रोमशः पुरुषः स्मृतः। उभयोरंतरं यच्च, तदभावे नपुंसक ॥४॥ मित्यादि। तदेयं प्रज्ञापनी न वेत्यापन्नसंशयस्तदपनोदाय पृच्छति, अत्र भगवानाह हंता गोयमेत्यादि, अक्षरगमनिका सूत्रांतरवदवगंतव्या, भावार्थस्त्वयं-प्रज्ञापनी, कथं ?,व्यवहारतः स्त्र्यादिवचनानामर्थांतरेऽपि प्रवृत्तेः, प्रतिपत्तिहेतुरूपत्वात् तत्रैव प्रवृत्तिदर्शनात् अदुष्टविवक्षासमुत्पत्तेः अपरपीडाजनकत्वाच्चेति। अहं भंतेत्यादि, प्रश्नसूत्रं, अस्याक्षरार्थः सूत्रांतरान्वाख्यानतोऽवगत एव, नवरं आज्ञाप्यतेऽनयेत्याज्ञापनी, स्त्रिया आज्ञापनी स्त्र्याज्ञापनी, एवमिति रे अयिनाच्ये, अभिप्रायस्त्वयं-आराधनी सत्येत्युक्ता, इयं च प्रज्ञापनी, विपरीता मृषेति, आज्ञाप्यमानश्चार्थः स्त्र्यादिस्तथा कुर्यान्न वा, आज्ञासंपादनक्रियायुक्तश्चाभिधीयते भाषयेत्यत इयं प्रज्ञापनी न वेति संशयापन्नो विनिश्चयाय पृच्छति, अत्र भगवानाह-हंता गोयमेत्यादि, इदमत्र हृदयं-या स्वपरानुग्रहबुद्ध्या साध्यमंतरेणामुष्मिकफलप्रसाधनाय प्रतिपन्नैहिकप्रयोजनालंबना विवक्षितकार्यप्रसाधनसामर्थ्ययुक्तविनीतविनेयजनविषया गीयते तत्त्वतस्सैव

प्रज्ञापनी, व्यवहारतोऽन्येति, उक्तं च—“अविणीयमाणवेंतो किलिस्सती भासती मुसं तहय, घंटालोहं णाउं को कडकरणे पवत्तेज्जा ? ॥ १ ॥” किरिया हि द्रव्यं विनयति नाद्रव्यमित्यभिप्रायः, अह भंतेत्यादि, या च स्त्रीप्रज्ञापनी, यथा योनिरित्यादि, या च पुरुषप्रज्ञापनी मेहनमित्यादि, या च नपुंसकप्रज्ञापनी स्तनादीत्यादि, प्रज्ञापनीयं भाषा मृषा, कोऽभिप्रायः ?- स्त्र्यादिवचनानामर्थान्तरेऽपि प्रवृत्तेः प्रतिपादितत्वाद् इत्थं प्रतिपादने नियमायोगात्, हंता गोयमेत्यादि निर्व्वचनं, अस्य गर्भो-व्यवहारतः खल्वित्थमपि प्रज्ञापनेऽपराधाभावः व्यवहारयोगात् कुत्सितविवक्षाऽयोगात् भावानतिपातादिति, अन्ये तु व्याचक्षते—या च स्त्री प्रज्ञापनेत्यादि, अत्र यदा स्त्र्यादिपरिणतोऽर्थो बाह्यमर्थं स्त्र्यादिविज्ञान-परिणतं प्रज्ञापयति शब्दनयदर्शनेन च स तस्मात् प्रज्ञाप्यमानादर्थादभिन्नस्तदुपयोगानन्यत्वाद् यथा पुंसः पुमांसमभिदधतः स्त्रियाः स्त्रियं नपुंसकस्य नपुंसकमिति तदर्थता, यदाऽपि पुमान् स्त्रियमभिधत्ते तदापि तदुपयोगानन्यत्वात् स्त्रीरूप एवासाविति समानलिंगतैव, नपुंसकमभिदधानो नपुंसकमेवेति समानलिंगता, एवं स्त्रीनपुंसकयोरप्यायोजनीयं, संग्रहव्यवहाराभिप्रायात्तु बाह्यार्थाद् वचनमात्मलाभं लभते, यदि बाह्योऽर्थस्तथा परिणतोऽस्ति ततः पुंसः पुल्लिंगवचनमभिदधतस्सत्यता, अतोऽन्यथा मृषातेति प्राप्ते मूढनयदर्शनेन प्रश्ने निर्व्वचनं विजातिरिति, स्त्रीलिंगोऽपि सन् पुमादिवृत्तिमनुभवति सर्व्वलिंगसमानाधिकरणश्च भवति, स्त्रीलिंगोपादानश्च भवति । अह भंते जातीत्यादि, जातौ स्त्रीवचनं सत्ता तथा जातौ पुंवचनं भावः तथा जातौ नपुंसकवचनं सामान्यं, प्रज्ञापनीत्यादि पूर्ववद्. भावार्थोऽपि सनिर्वचनसूत्रः पूर्ववदेव, अन्ये तु व्याचक्षते—जातौ स्त्रीवचनं यथा गृहकोकिलिकेत्यादि, जातौ पुंवचनं कोकिलइत्यादि, जातौ नपुंसकवचनं आम्रनमित्यादि, प्रज्ञापनी एषा, न एषा मृषा,

कोऽभिप्रायः ?– गृहकोलिकाशब्दो हि त्रिलिंगयुक्तार्थवाचकः स्त्रीपुंनपुंसकसद्भावात्, एवं कोकिलशब्दोऽपि, एवमासनशब्दोऽपि मंचिकासन्दकपीठकादिषु, हंता गोतमेत्यादि निर्व्वचनं, गर्भार्थः प्राग्भावित एव, अह भंते! जातीति इत्थिआणमणीत्यादि, पूर्वोक्तानुसारत एवोक्तोदाहरणापेक्षया भावनीयं। अह भंते! जातीति इत्थिपण्णवणीत्यादि स्त्रीजातिप्रज्ञापनीत्यादि, प्रागविशेषेण स्त्रीप्रज्ञापन्याः प्रतिपादितत्वात् सांप्रतं जात्या विशेषितत्वादपौनरुक्त्यमिति भावनीयं, अन्यथा वा आगमाविरोधतो भेदो वाच्यः, एवमन्वर्थसंज्ञया प्रज्ञापनीशब्दमधिकृत्यानंतगमपर्य्यायत्वात् सूत्रस्य व्याख्यातानि सूत्राणि, अन्ये तु पारिभाषिकीमसत्यामृषां प्रज्ञापनीशब्दमधिकृत्य कथमपि सर्वत्र निगमनमभिदधति, तत् स्वबुद्ध्या भावनीयमित्यलं प्रसंगेन। अह भंते मंदकुमार एवेत्यादि, मंदकुमारक-उत्तानशायको बालः सोऽनाभोगिकेन कायवीर्येण भाषापुद्गलोपादानं कृत्वा निसर्गकाले ब्रुवन् जानाति-अहमेतत् ब्रवीमीति?, अथ कोऽस्य प्रश्नस्यावकाश इति ?, उच्यते, प्रदेशांतरे उक्तं–"बुद्धीदिट्ठे अत्थे जं भासइ तं सुतं मतीसहितं।" तत्र मतिश्रुतज्ञानभेदप्ररूपणं कुर्व्वाणेनाचार्येण बहुप्रकारं गाथार्द्धं व्याख्यायोपसंहृतं, अथवा सामान्येनेह मतिश्रुतात्मिका बुद्धिरधिक्रियते, तथा दृष्टानर्थान् भाषत एव कदाचिदपीति संभवमात्रमंगीक्रियते, नावश्यं भाषमाण एव, तदिह भाषमाणस्य भावश्रुतमतोऽन्या मतिः, मतिसहितमिति श्रुतविज्ञानसहितमुपयुक्तस्येतियावत्, यान् भाषते एवावश्यं कदाचिदपि तच्छ्रुतमनुभाषमाणस्य श्रुतमेवेति, यस्मान्मतिज्ञानालोचिता अपि केचिद्द्रव्यश्रुतेनोच्यंते, अवध्यादिज्ञानालोचिताश्च, एवं सर्वमेव हि श्रुतज्ञानं ध्वनिपरिणाममिति, मतिज्ञानं चोभयपरिणाममित्युक्तं भवति, अतो विज्ञानमेव वाग्रूपापन्नमिति प्रश्नः, तथाऽन्यैरप्युक्तं–"आत्मा बुद्ध्या

समर्थ्यार्थान्मनो युंक्ते विवक्षया । मनः कायाग्निमाहंति, स प्रेरयति मारुत ॥१॥" मित्यादि, व्याकरणं-णो इणट्ठे समट्ठे पर्याप्त्यापर्याप्तस्यापि सतः मनःकरणमपटु, अपटुत्वाच्च करणस्य क्षयोपशमो मंदः, मनःकरणं च श्रुतज्ञानावरणस्य क्षयोपशमहेतुस्तस्मान्न जानाति अहमेतत् ब्रवीमीति, नान्यत्र संज्ञिन इति, अन्यत्रशब्दः परिवर्जनार्थः, यथा "अन्यत्र द्रोणभीष्माभ्यां, सर्वे योधाः पराङ्मुखाः" भीष्मद्रोणौ वर्ज्जयित्वेत्यर्थः, एवमिहापि, तत्र संज्ञी अवधिज्ञानी जातिस्मरी वा, एवं कवलाहारं आहारेमाणे, अम्मापियरो भट्टिदारए इति, भट्टी-सामी तस्स दारओ-पुत्तो, सर्वत्र संज्ञिनं मुक्त्वा न जानाति, अतिराउले देशीभाषया स्वामिकुलं, शेषं निगदसिद्धं यावत् अह भंते ! उट्ठे गोणेत्यादि, अत्रापि बालावस्था गृह्यत इति केचित्, अह भंते पुढवीति इत्थियाणमणीत्यादि, अत्र कर्म्मतया आज्ञापनं वेदितव्यं, यथा पृथिवीं कुर्व्वित्येके, पृथिवीमानयेत्यन्ये, एवं पुरुषनपुंसकयोरपि भावनीयं, पुढवीति इत्थीपण्णवणित्ति, पृथिवीस्वरूपं स्त्रीत्वेन प्रज्ञापयति च इति विशेषप्रश्नः, भासा णं किमादीया इति प्रश्नः, निर्व्वचनं-गोयमा ! भासा णं जीवादीया इत्यादि, जीवाद्या तथाविधवत्प्रयत्नमंतरेण भाषाया अभावात् जीवमूलेत्यर्थः, उक्तं च-"तिविहंमि सरीरंमी जीवपदेसा हवंति जीवस्स । जेहि उ गिण्हति गहणं तो भासति भासतो भासं ॥१॥" अत एव शरीरप्रभवा, शरीरादेव तद्दंडनिर्गतेः, वज्रसंठिता लोकव्यापित्वात् तथा संस्थानात् लोकाकारत्वाल्लोकवद्वज्रसंस्थितेति, लोगंतपज्जवसिया लोकव्यापि चादेव प्रज्ञप्तेति । भासा कुतो य पभवा इत्यादि प्रश्नः, निर्व्वचनं-सरीरप्पभवा भासेत्यादि, तत्र शरीरप्पभवा भासा जम्हा काययोगेणं, भंते ! भासाजोग्गे पोग्गले गेण्हित्ता भासत्ताए परिणामित्ता वइजोएणं णिसरति, दोहिं समएहिं निसिरिति- भासति, एगंतरं गिण्हति निसरति

एगंतरं चेति, पढमसमयगहिए पोग्गले बितियसमए णिसिरति, तेण दोसमया भासा, चउप्पगारा सच्चादि, दोण्णि य भासा अणुमयाओ उ-सच्चा असच्चमोसा य, पर्याप्ता-अलं समर्था अर्थप्रतिपादनं प्रति, कतिविहा णमित्यादि प्रश्नः, निर्व्वचनं- पज्जत्तिका य अपज्जत्तिगा य, इह पज्जत्तिगा णाम जा अवधारेउं सक्कति, जहा सच्चा मोसा वेति, जा पुण सच्चावि मोसावि दुपक्खग्गाहिणी सा ण सक्कति विभावेउं जहा एसा सच्चा मोसा वेति अपज्जत्तिगा, शेषं निगदसिद्धं यावत् जणवतेत्यादि, तत्र जनपदसत्यं नाम नानादेशीभाषारूपमप्यविप्रतिपत्त्या यदेकार्थप्रत्यायनव्यवहारसमर्थमिति, यथोदकार्थे कोंकणादिषु पयः पिच्चं नीरमुदकमित्यादि, अदुष्टविवक्षाहेतुत्वान्नानाजनपदेष्विष्टार्थप्रतिपत्तिजनकत्वाद् व्यवहारप्रवृत्तेः सत्यमेतदिति, एवं शेषेष्वपि भावना कार्या, सम्मतसत्यं नाम कुमुदकुवलयोत्पलतामरसानां समाने पंकजसंभवे गोपालादीनां सम्मतमरविंदमेव पंकजमिति, स्थापनासत्यं नाम अक्षरमुद्राविन्यासादिषु यथा माषकोऽयं कार्षापणोऽयं शतमिदं सहस्रमिदमिति, नामसत्यं नाम कुलमवर्द्धयन्नपि कुलवर्द्धन इत्युच्यते धनमवर्द्धमानोऽपि धनवर्द्धन इत्युच्यते, अपक्षस्तु पक्ष इति, रूपसत्यं नाम तदगुणस्य तथा रूपधारणं रूपसत्यं, यथा प्रपंचयतेः प्रव्रजितरूपधारणमिति, प्रतीत्यसत्यं नाम यथा अनामिकाया दीर्घत्वं ह्रस्वत्वं चेति, तथाहि तस्यानंतपरिणामस्य द्रव्यस्य तत्तत्सहकारिकारणसन्निधानेन तत्तद्रूपमभिव्यज्यत इति सत्यता, व्यवहारसत्यं नाम दह्यते गिरिः गलति भाजनं अनुदरा कन्या अलोमा एडिकेति, गिरिगततृणादिदाहे लोके व्यवहारः प्रवर्त्तते, तथोदके च गलति सति, तथा संभोगजीवप्रभवोदराभावे च सति, लवनयोग्यलोमाभावे चेति, भावसत्यं नाम शुक्ला बलाका, सत्यपि पंचवर्णसंभवे, योगसत्यं नाम छत्रयोगाच्छत्री दंडयोगाद्दंडीत्येवमादि, उपमया सत्यं नाम समुद्रवत्तडागं, 'मोसा दसविहा, कोहादि-

णिस्सिया' क्रोधाभिभूतो विसंवादनबुद्धया असत्येन परं प्रत्याययन् सत्यमसत्यं वा वदति, तस्याशयविप्रतिपत्तितः घुणाक्षरमिव कदाचित् सत्यं तथापि तन्मृषैव, 'माणणिस्सिया' जं तु अत्तुकस्सेण अभूतमपि ऐश्वर्याद्यनुभूतमिति प्रकाशयति, मायाकारकवच्चक्षुर्मोहेन शकटादीनां मुखप्रवेशनादि मायाणिस्सिया, वणिज्जादि कूडमाणसमयकरणं वा लोभणिस्सिया, अतिप्रेमाणं दासोऽहं तवेति पेज्जणिस्सिया, पडिनिविट्ठस्स तित्थगरादीणवि अपवादभासणं दोसणिस्सिया, हास्यनिसृता नर्मानृतं, भयनिःसृता तस्करादिभयेऽसमंजसवचनं, आख्यायिकानिसृता आख्यायिकाऽसंभव्यमिधानं, उपघातनिसृता अभ्याख्यानवचनं। सच्चामोसा दसविहा उप्पण्णभीसगविगतमीसगादि,उद्दिस्स गामं वा नगरं वा दमण्हं दारगाणं जंमं पगासंतस्स ऊणेसु अहिएसु वा एवमादि उप्पन्नमिस्सिया, एमेव मरणकहणे विगयमिस्सिया, जम्मणस्स मरणस्स य कयपरिणामस्स उभयकहणे विसंवादणे उप्पाएण विगतमिस्सिता,जीवंतमयगसंखणगादिरासिदरिसणे अहो महं जीवरासित्ति भणंतस्स जीवंतेसु सच्चा मएसु मोसत्ति जीवमिस्सिता, एत्थ चेव बहुसु मतेसु अहो महंतोऽजीवरासित्ति भणंतस्स मएसु सच्चा जीवंतेसु मुसा इति अजीवमिस्सिया, सच्चं मयममयं वा उभयं णियमेण अवधारयंतस्स विसंवादे जीवाजीवमिस्सिया, मूलकादि अणंतकायं तस्सेव पडिरिक्कयपंडुपत्तेहिं अण्णेण वा वणस्सइकाएण मिस्सं दट्ठूण एस अणंतकायोत्ति भणंतस्स अणंतमिस्सिया, तमेव समुदयं करमेत्ते परित्ताणं अमिलाणं रासीकयं परित्तमिति भणंतस्स परित्तमिस्सिया, अद्धा कालो सो दिवसो रत्ती वा, जो तम्मिस्सियं करेति, परं तुरियावेंतो दिवसतो भणति-उट्ठेहि रत्ती जायत्ति, एसा अद्धामिस्सिया, तस्सेव दिवसस्स रातीए वा एगपदेसो अद्धद्धा, तं पढमपोरिसिकाले तहेव तुरियंतो मज्झण्हीभूतं भणंतस्स अद्धद्धमिस्सिया। असच्चामोसा 'आमंतणी'त्यादि, हे देव इति आमंतणी, एसा किलाप्रवर्त्त-

कनिवर्त्तकत्वात् सत्यादिभापात्रयलक्षणवियोगतश्चासत्यामृषेति, एवं स्वबुद्धया अन्यत्रापि भावना कार्येति, कज्जे परस्स पवत्तणं जहा इमं करेहित्ति आणवणी, कत्थइ वत्थुविसेसस्स देहित्ति मग्गणं जायणी, अविण्णायस्स संदिद्धस्स वा अत्थस्स जाणणत्थं तदभिजुत्तचोदणं पुच्छणी, विणीयस्स उवएसो जहा–पाणवहाउ णियत्ता हवंति दीहाउया अरोगा य एमादी पण्णवणी पण्णत्ता वीयरागेहिं ॥ १ ॥ जायमाणस्स पडिसेहणत्थं पच्चक्खाणी, कज्जोवघातितस्स तथा भवतु ममवि पढममभिप्पेयंति इच्छाणुलोमा, अत्थाणभिग्गहेणं बालुम्मत्तपलावपहसितादि अणभिग्गहिया, घडातिअत्थपडिवायणमभिग्गहिया, एएसऽन्नायणी अणभिग्गहिया सैव, चशब्दः समुच्चयार्थः, सैंधव इव पुरिसवच्छलवाजिसु पवत्तमाणा संसयकरणी, घटादिलोगपसिद्धसद्दत्था वोगडा, अतिगंभीरसद्दत्था लल्लक्खरपउत्ता वा अविभावियत्था अधोगडा, शेषं सूत्रसिद्धं, यावत् णण्णत्थ सिक्खापुव्वगंतीतीत्यादि, शिक्षापूर्वकं शुकसारिकादयः संस्कारविशेषात् प्रायः चतुर्विधामपि भाषां भाषंते, उत्तरगुणलब्धिं वा प्रतीत्य जातिस्मरणादौ कुतश्चित् क्षयोपशमविशेषाद्, विक्रियाकरणवत्, शेषं प्रकटार्थं यावत् ठिताइं गेण्हतीत्यादि, तत्र स्थितानि स्वस्थाने, न गमनक्रियावन्तीत्यर्थः, एगसमयठितियाइंति स्थितिपरिणामं प्रति, जाव असंखिज्जसमयठितीयाइंति, कथं?, यस्मादुक्तं 'अणंतपदेसिए णं भंते! खंधे केवइयं कालं सेए?, गोयमा! जहण्णेणं इक्कं समयं उक्कोसेणं आवलियाए असंखिज्जइभागं, णिरेये जहन्नेणं एक्कं समयं उक्कोसेणं असंखेज्जं कालं' ततो, ताणि गेण्हमाणो अणंतरसमयंमि चेव गेण्हति, गिण्हणाणंतरमेव णिसिरणभावादिति, ण ताणि य गमणजोगा, अन्ये त्वभिदधति–एकसमयस्थित्यादि भाषापरिणामाऽपेक्षयोच्यते, यस्मात् किल विचित्राः पुद्गलपरिणामा इति, तान्येवानेकधा परिणाममासादयंतीति, 'गहणे'त्यादि 'गहणदव्वाइं पडुच्च' इति तत्र गृह्यत इति ग्रहणं तच्च तद् द्रव्यं च ग्रहणद्रव्यं, एतदुक्तं भवति–जाइं गहणजोग्गाइं ताइं कयाइं कालादिवण्णपरिणामेणं एक्केण दोहिं तीहिं

चउर्हि पंचहि य भवेज्ज, सव्वगहणं पडुच्च इति यदा समुदायो विवक्ष्यते तदा नियमा पंचवण्णाइं, एवं तेहिं तेहिं गंधरसफासेहिं भाणियव्वं । 'पुट्ठा' इति आत्मप्रदेशैः स्पृष्टानि गृह्णाति, 'ओगाढाइं'ति जेसु आगासपदेसेसु जीवपएसा ओगाढा तेसु चेव ताइंपि ओगाढाइं गेण्हति, अणंतरोगाढाइंति आत्मप्रदेशानन्तरस्थानि गृह्णाति, नैकादिव्यवहितानि, भाषाया आदिमध्याव-सानेषु सर्वेष्वपि गृह्णाति, सविसये गिण्हइत्ति विषयो–गोचरः स एव स्पृष्टावगाढानन्तरावगाढाख्यः तस्मिन् गृह्णाति विषये, आणुपुव्वीए यथाऽऽसन्नं नातिक्रम्य, स्थित्वापि गृह्णाति, प्रतिसमयमपि गृह्णाति, यदा सान्तरं गृह्णाति तदा जघन्यत एकं समयमंतरं कृत्वा गृह्णाति, भाषाप्रवृत्तस्यैव भाषमाणस्येदमन्तरं चिन्त्यते. एकस्मिन् समये गृहीत्वा मोक्षसमये वा अनुपादानं कृत्वा तृतीयसमये पुनर्गृह्णीयात्, निरंतरग्रहणे तु जघन्यतो द्वौ समयौ निरंतरौ, तदा प्रथमसमये गृह्णात्येव, न मुंचत्यपि, द्वितीयसमये प्रथमसमयगृहीतांश्च मुंचत्यन्यांश्च वाक्पुद्गलानुपादत्ते, तृतीयसमये तानेव द्वितीयसमयोपात्तान् मुंचत्येव पुनर्न भाषते, उत्कर्षेण त्वसंख्येयान् समयान् ग्रहणं करोति, तत्राद्ये ग्रहणमेवान्त्ये मोक्ष एव, द्वितीयादिषु तु द्वयमपि च युगपत् करोति, पूर्वसमयगृहीतानां यदैव मोक्षस्तदैवोत्तरसमयानां ग्रहणं, एवं सर्वेषु मध्येषु, स्थापना चेयं, अन्यार्थनियमितानि भृशं क्षिप्त लोष्टवद्, तेसिं पंचविहे भेदे पण्णत्ते, तंजहा-खंडभेदेइत्ति इत्यादि यत् चूर्णीकृतानि भवंति लोष्टवत्, प्रतरभेदे अभ्र-पटलभूर्जपत्रादिवत्, अनुतडिकाभेदे इक्षुतडागतरिकादि, छल्यादिवत, चूर्णिकाभेदे क्षिप्तपिष्टवत् ,उत्करिकाभेदे मृत्पार्थिववत् । अज्झत्थवयणं अध्यात्मं, अज्झत्थाय योजनीयं, विवक्षा उत्तरकालपर्यंतं भवतीत्यन्ये, उपनीतवचनं प्रशंसावचनं अपनीतवचनं निन्दावचनं, उपनीतापनीतवचनं प्रशंसित्वा निन्दति, अपनीतोपनीतवचनं निन्दित्वा प्रशंसतीति ॥

॥ प्रज्ञापनाप्रदेशव्याख्यायां एकादशपदव्याख्या समाप्तेति ॥